# महावाक्यविचारः

ग्रन्थप्रणेता

डा. कोराड सुब्रह्मण्यः

प्रकाशनम्

श्रीलक्ष्मणार्य भव्यस्मृति ग्रन्थमाला - द्वितीय पुष्पम्

भाग्यनगरम्

| | |
|---|---|
| About the Author | येषामस्ति कुतूहलं भुवि महावाक्यार्थविश्लेषणे<br>मीमांसाम्बुधिमज्जने प्रणयिनो वेदान्तसारे च ये।<br>न्याये व्याकरणे कणादभणितौ साहित्यशास्त्रेऽपि वा<br>तेषामस्तु मनीषिणां हृदि महानन्दारविन्दोदयः ॥ १ ॥<br><br>वेदे वेदाङ्गनिचये दर्शनानां समुच्चये ।<br>स्वमनीषाभियोगाप्तविवेकः सुपरिश्रमी ॥ २ ॥<br><br>महावाक्यविचारं च सुब्रह्मण्यसुधीरयम्।<br>व्यातेने विदुषां प्रीत्यै प्रीयतां स महेश्वरः॥ ३ ॥<br><br>सोऽहं दुर्गामहालक्ष्म्याः सुब्रह्मण्यस्य धीमतः।<br>द्वितीयस्तनुजश्चास्मि कोराडान्वयसम्भवः॥ ४ ॥<br><br>पितामहो महाश्रौती याजकश्च सनामकः।<br>मातामहस्तु सिद्धान्ती सूर्यनारायणाभिधः॥ ५ ॥<br><br>पिता घनान्तस्वाध्यायी कल्पव्याकरणाञ्चितः।<br>संगीतभूषिता माता ह्युषादेवी च मे सती ॥ ६ ॥ |
| About the Book | The book is the Ph. D. thesis of the Author (Dept. of Sanskrit, Andhra University, 1982). It had been adjudged the best thesis in 1982. |

# महावाक्यविचारः

ग्रन्थप्रणेता

**डा. कोराड सुब्रह्मण्यः**

प्रकाशनम् :

**श्री लक्ष्मणार्य भव्यस्मृति ग्रन्थमाला**-*द्वितीय पुष्पम्*

**भाग्यनगरम्**

*श्री लक्ष्मणार्य भव्यस्मृति ग्रन्थमाला - द्वितीय पुष्पम्*

*प्रकाश वत्सरः - २०१२*

प्रतयः पञ्चशतम्

मूल्यम् : **Rs. 100**

ग्रन्थप्रणेता :

**डा. कोराड सुब्रह्मण्यः**
केंद्रिय विश्वविद्यालयः
भाग्यनगरम्



ग्रन्थोपलिब्दि स्थानम् :

**डा. के. सुब्रह्मण्यः,**
299, Doyen, Serilingapamlly, Hyd. 500019
[redacted]korada11@gmail.com
Cell: 9866110741

***प्रकाशकः*** *शास्त्ररत्नाकरः, शास्त्रविद्वन्मणिः,*

**डा. समुद्राल वेङ्कट रङ्गरामानुजाचार्यः**
डैरेक्टर् : (अकडमिक् कौन्सिल्)
**जीवा:** जीयर इन्टिग्रेटेड् वेदिक् अकाडमी,
श्रीरामनगरम् - मुच्चिन्तल् (ग्रामः),
पालमाकुल (पोस्ट्) 509325, **Cell:** 94415 62863, 96768 25361

***टंकणम् :*** M V S **वीरनागेंद्रः**

***मुद्रणम् :*** **श्रीरामानुजवाणी,** सीतानगरम्, Ph: 0866 2420820

# अन्तरङ्गदर्शिनी

# PREFACE

Sentence is taken as a unit of language. A group of words, which render a unitary meaning, is called a sentence. On the other hand a group of sentences which are interconnected and serve a single purpose or idea is called a Discourse or a Macro-sentence or a Mahāvākya. The virtue of serving a single purpose or idea is called onesentenceness. It exists in a sentence as well as in a Macro-sentence.

The ancient propagators of almost all the schools, such as Pūrvamīmāṃsā, Vedānta, Vyākaraṇa, Nyāya, Vaiśeṣika and Ālaṅkārika have observed this syntactical phenomenon. They difined and expounded onesentenceness in connection with Mahāvākya which is also a syntactical unit.

In this work I tried my best to prove that Mahāvākya the unit of language both in Vedic, Sastric and spoken languages.

In this connection I sincerely thank Prof. P. Sriramamurthy who encouraged and guided me all the way in brining the book to the present shape. I am indebted a lot to Sri Appalla Someswara Sarma who patiendly listened the material to the letter and suggested additions and omissions in the script. My profound thank go to Sri Rani Narasimha Sastry who enlightened me in Vedānta and thus helped in bringing out the concepts of Mahāvākya of the Vedantins.

**Dr. K. Subrahmanyam**

व्याकरणालङ्कारचक्रवर्ती,
साहित्यविशारदः,
व्याकरणविद्याप्रवीणः,
साहित्यविद्याप्रवीणः, भाषाप्रवीणः
**अप्पल्ल सोमेश्वरशर्मा,**
M.A. P.O.L.

उपाचार्यः (विश्रान्तः)
संस्कृतविभागः
आन्ध्रविश्वकलापरिषत्
वाल्तेरुः

## अभिनन्दनम् आशीर्वादश्च

वर्तमानविश्वविद्यालयविद्यासंविधाने "पिहेच्.डि." पट्टमुत्तमोत्तमं परिगण्यते। तत् प्रणालीचेत्थं विद्यते - "एम्.ए." पट्टाभिषिक्तः यः कोपि वा अनुशीलनासक्तः यं कञ्चन प्रमुखं विषयमधिकृत्य प्रबन्धमेकं सङ्कलय्य विश्वविद्यालयाधिकरणाय समर्पयति। ततो यथाक्रमं यथानियमं च तद्विषयचुञ्चवः त्रिचतुरा अभियुक्ताः तं परिशील्य स्वीयमङ्गीकारं निवेदयन्ति। समनन्तरं विश्वविद्यालयः तदनुशीलकाय "पिहेच्.डि." पट्टं प्रददाति। सद्य एव सः "डाक्टर्" उपाधिना आत्मानमलङ्करोति। अत्र "डाक्टर्" पदं तत्तद्विषयकोविदत्वं प्रकटयति। भवतु।

उक्तप्रणालीमनुसृत्यैव "महावाक्यविचारः" इत्ययं प्रबन्धः "डाक्टर्" भूषणं सम्पादयामास संस्कृते लोके। सम्भूषितश्चात्र आयुष्मान् कोराड सुब्रह्मण्यः। शैष्योपाध्यायिकया अयं मे अतीव संनिहितः। अभियुक्तप्रयुक्तानां शिष्यः, छात्रः, अन्तेवासी - इत्यादि पदानां सर्वेषामप्यास्पदं भवत्ययं मदीये प्रकरणे। सोयं स्वप्रबन्धमधिकृत्य "यत्किञ्चित् वक्तव्यम्" इति सप्रश्रयं, सानुरागं च बहुशो न्यवेदयत्। अनुशीलननिबन्धे निकषपरीक्षिते तदिदं चर्वित-

चर्वणं भवेदिति वार्यमाणोऽपि गुरुबन्धाभिनिवेशमुद्घाटयतिस्म सुब्रह्मण्यः। वात्सल्यं मां परवशमकरोत्।

किञ्च अद्यत्वे प्रायेण शास्त्रीयेषु विषयेषु अनुशीलनमल्पाल्पं प्रचलति। कष्टतरं हि तत्। तत्तत्कविकाव्यरूपकपुराणाद्यंशेषु तु तादृशं परिशीलनं शतशः प्रसरति। आपेक्षिकं सौकर्यं तत्र निदानं स्यात्। प्रकृतः प्रबन्धः शास्त्रैकसारमंशं स्वीकृत्य सुतरां प्राऽवर्तत। अतः शास्त्रपक्षपातोऽपि किञ्चित् प्रचोदयतिस्म।

किञ्च अस्यां प्रबन्धप्रक्रियायामुपक्रमात् प्रभृत्युपसंहारपर्यन्तमात्मा यथावसरं यथोचितं च समन्वितोऽभूत्। कर्तव्यताऽपि स्मृतिगोचरा आसीत्। एवं हेतुवशंवदः किञ्चिदेव वक्तुमुत्सहे।

"देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति" इति खल्वार्षं वचनम्। "वागेवेदम् सर्वम्" इत्यपि तदेव। वाग्देवीविलास एव सत्यं सर्वमिदं जगत्। तस्या देव्याः स्वभिव्यक्तं स्वरूपमेव भाषेत्युच्यते। सर्वव्यवहारहेतुश्च सा। अत एव "न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते। अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते" इत्यवितथमाह आचार्यो हरिः। भाषया विना लोकोऽयमन्धप्रायो भवेत्। वृत्तानां वर्तमानानां च सकलज्ञानविज्ञान-राशीनां निदानं निधानं च भाषैवेति वक्तुं शक्यते। यद्यपि लोकव्यवहारे सहस्रशः भाषाः सन्ति, अथाऽपि तासु सर्वसमर्थाः मनोहराश्च पञ्चषा एव। तास्वपि मूर्धन्या संस्कृतभाषा। अत एव "भाषासु रम्या गैर्वाणी" इति सार्थकं वचः। गैर्वाण्यां शब्दार्थविषयिणी चर्चा सुमहती सम्पन्ना। वेदेषु तदङ्गेषु, प्रधानेषु तन्त्रेष्वपि सा परिदृश्यते। नवीनभाषाशास्त्रराद्धान्ताः बहवो बीजाङ्कुरादिन्यायेन

तत्र प्रकाशन्ते। "कः शब्दः? कोऽर्थः? तयोः सम्बन्धः कीदृशः? स नित्यो वा कृतवो वा?" इत्यादीनंशानधिकृत्य परमा निर्णयाः कृताः। पदम्, वाक्यम्, महावाक्यम् - इत्यादीनां स्वरूपमपि सम्यगालोडितमस्ति। अस्तु।

शब्दार्थसम्बन्धादिचर्चाप्रवणेषु तन्त्रेषु शिरोमणिः पूर्वमीमांसा। अनन्तरं व्याकरणम्। ततश्च न्यायशास्त्रम्। वेदान्तालङ्कारादिकं च तन्त्रजातं सर्वमुक्तमार्गत्रयमेवानुसरति यथेच्छमिति सामान्येन वस्तुस्थितिः। तत्र प्रस्थानप्रवर्तकानां मीमांसकानां, वैयाकरणानां, नैयायिकानां च तत्तत्सिद्धान्त-विषये परस्परमभिप्रायभेदः, तन्मूलको वाक्कलहश्च नितरां चिराद्विराजते। वर्णो नित्यः, तत्समुदायः पदम्, तत्समुदायो वाक्यमिति केचन। नित्यः अखण्डः, वाक्यरूपः, स्फोटात्मकः शब्द एव परं ब्रह्म, वर्णपदादिकं नास्त्येव - तत्कल्पना केवलं व्यवहारार्था - इत्यन्ये। अनित्यः शब्दः, मुख्यं पदम्, तत्समुदाय एव वाक्यमिति परे। एवं शाब्दबोधविषयेऽपि बहवो विकल्पाः सन्ति। शाब्दबोधे भावना (विधिरूपा) मुख्येति पूर्वतन्त्रिणः। व्यापारो मुख्य इति शाब्दिकाः। प्रथमान्तार्थः प्रधानमिति तार्किकाः। नैसर्गिकीयं किल लोकरीतिः। "असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते।" व्यवहारदशायां भेदः, परमार्थदशायां त्वभेदः सर्वशरण्य एक एवेति ऋषीणामुद्घोषणम्।

यद्वा तद्वा स्यात्। परन्तु व्यवहारे वाक्यमेव सर्वथा अर्थसमर्पकमिति सर्वेषामनुभवः। अतो वाक्यमेव भाषायाः सहजं स्वरूपं भवितुमर्हति। सम्भाषणे-शब्दविस्तरे, सङ्घटनायां प्रबन्धादिषु च तात्पर्यप्रवणमुपदेशरूपमेकमेव सारभूतं वाक्यं फलति। तदेतन्महावाक्यमिति सङ्केतितं शास्त्रकृद्भिः, अनुभवैकवेद्यं च सर्वस्य सहृदयस्य महत्त्वं चास्य न केवलं स्वरूपतः, न शब्दतः, नार्थतः,

नाऽप्युभयतः। यथायथं यथैचित्यं च महत्त्वे तत्तत् प्रयोजकं भवेत्। सर्वथा च साररूपत्वमत्र न व्यभिचरति। अत एव च सर्वं वाङ्मयं महावाक्यात्मकमिति परमसिद्धान्तः भाषातत्त्वज्ञैः समाद्रियते।

तदेतन्महावाक्यमुद्दिश्य प्रमुखाः तन्त्रकाराः, विस्तृतां गोष्ठीं प्रवर्तयामासुः। तदनुसारेणैव श्रीसुब्रह्मण्यः सम्यगनुशीलनं विधाय, महता प्रयासेनाऽमुं प्रबन्धमवतारयति स्म। अत्र च पूर्वमीमांसकानां, वैयाकरणानां, तार्किकाणां, वेदान्तिनां च सिद्धान्तसंग्रहो निपुणं निरूपितः। वैयाकरणपुच्छभूतानामालङ्कारिकाणामाशयोऽप्याविष्कृतः। लोकगतिरपि प्रदर्शिता, सर्वत्र विषयग्रहणे, क्रमबन्धे, आदाने, विसर्गे, सङ्कोचे, विकासे च यथास्वमौचित्यमवलम्बितम्। सङ्घटनायामपि श्रद्धा निर्व्यूढा। भाषालालित्यमव्याहतं वर्तते। विशिष्य च पूर्वतन्त्रसन्दर्भे तत्तत्प्रकरणनिर्देशे, समन्वये, सारग्रहणे च अनुशीलकेन सुब्रह्मण्येन महत् कौशलमाविष्कृतम्। "साधुवत्स ! साधु !"

"महावाक्यविचारोऽयं नवीनानुशीलसंवलितः शास्त्रसारपिपासूनां सर्वेषामुपकाराय प्रभवतीति मे अभिसन्धिः"। "डाक्टर्" कोराड सुब्रह्मण्यः इतः परमपि ईदृशान् ग्रन्थान् बहून् विरच्य "समानानामुत्तमश्लोकोऽस्तु" इति वात्सल्यपरिपूर्णेन मनसा आशासे। इति शम्।

हेच्.नं.50-96-8/ए
टि.पि.टि.कोलनी, सीतम्मदार,
विशाखपट्टणम् - 13

अ. सोमेश्वरशर्मा
क्री.श.10.4.86
(अक्षय-चैत्रशुक्लप्रतिपत्, गुरुवासरः)



# उपक्रमः

लोके परस्पराभिप्रायप्रकटनाय प्रयुज्यमानानि साधनानि बहूनि सन्ति। यथा - अभिनयः, चित्राणि, भाषा च। तेषां मध्ये लघीयस्साधनं भाषैव। यतो हि भाषयैव सर्वोऽपि वक्तुरभिप्रायः श्रोत्रा स्पष्टमवगन्तुं शक्यते, न त्वन्यैर-भिनयादिसाधनैः। लोकव्यवहारश्च भाषां विना न प्रचलति। स्पष्टीकृतोऽयं विषयः श्रुतिवाक्येनानेन[1] ... "यद्वै वाङ्नाभविष्यन्न धर्मो नाधर्मो व्यज्ञापयिष्यन्न सत्यं नानृतं न साधु नासाधु न हृदयज्ञो नाहृदयज्ञो वागेवैतत्सर्वं विज्ञापयति वाचमुपास्स्वेति" इति। एतेन सकलविधस्याऽपि ज्ञानस्य वागेव कारणभूतमिति प्रतिपादितं भवति। श्रुत्यर्थोऽयं द्रढीकृतश्शास्त्रकारैः। तथाहि ... वाक्यपदीये हरिणोक्तम्[2]....

न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥ इति।

यदि वाङ् नाभविष्यत् तर्हि ज्ञानप्रकाशनं बहुदुष्करमभविष्यदित्यपि प्रतिपादितं शास्त्रकृद्भिः। उक्तं हरिणा [3] .....

वाग्रूपता चेन्निष्क्रामेदवबोधस्य शाश्वती।
न प्रकाशः प्रकाश्येत साहि प्रत्यवमर्शिनी॥ इति।

दण्डिनाऽपि काव्यादर्शे एवमभाणि [4] .....

वाचामेव प्रसादेन लोकयात्रा प्रवर्तते।
इदमन्धंतमः कृत्स्नं जायेत भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते।। इति।

किञ्च "व्यवहारार्थं सत्स्वप्यन्येषूपायेषु अभिनयादिषु किं शब्द एवाश्रीयते" इत्याशङ्क्य यास्केन निरुक्ते[5] लघीयस्त्वमेव तत्र हेतुरिति समाहितम्। तथाहि .... .... .... "अणीयस्त्वाच्च शब्देन संज्ञाकरणं व्यवहारार्थं लोके" इति। लाघवेन कार्यसिद्धौ सत्यां गौरवं केनाऽपि नाद्रियते लोके इति कृत्वाऽभिनयादीन् विहाय शब्देनैव संज्ञाकरणमिति भावः। अत्र भाषापर्यायत्वेनैव "शब्दः" इति प्रयुक्तम्।

सैषा भाषा सुचिरात् परस्परमभिप्रायप्रकटनायोपयुज्यते। सा च वर्णपदादिरूपेण बहुविधा। तत्र च सम्पूर्णार्थबोधनेन कार्यसाधकं वाक्यमेवेति तस्यैव परमप्रमाणत्वं निरणायि। तथाऽपि वाक्यसमुदायात्मकं महावाक्यमेव भाषायाः प्रमाणमिति वक्तुं पारयामः। वाक्यमिव महावाक्यमित्यपि काचन शब्दसंज्ञा। लोके विवक्षितार्थमनुसृत्यैव वाक्यं महावाक्यं वा प्रयुज्यते। वाक्यस्य महत्त्वं च न केवलं स्वरूपाश्रयम्, परन्तु विवक्षामर्थगौरवं, तात्पर्यं चाश्रित्यापि प्रवर्तते। अत एव तत्त्वमसीत्यौपनिषदां, स्वधर्मे निधनं श्रेय इत्यादिपौराणिकानां च वाक्यानां महावाक्यता व्याख्यायते बुधैः। महावाक्यगतानामवान्तरवाक्यानां सर्वेषामपि एकार्थबोधकत्वं समाश्रित्यैव महावाक्यसंज्ञा कृता।

प्रथमं पूर्वमीमांसकैरेव "अर्थैकत्वेनैकवाक्यत्व"मिति विषयः प्रत्यपादि। किञ्च तैरेव संज्ञैषा विशेषणसहितेषु वाक्येषु औपचारिकत्वेन प्रयुक्ता। तथैव

वेदान्तिभिरपि "तत्त्वमसी"त्यादीनां महावाक्यसंज्ञा प्रदत्ता। यद्यपि तत्तन्महावाक्ययुक्तप्रकरणगतानां सर्वेषां वाक्यानां सम्भूय महावाक्यसंज्ञा कर्तुं शक्या, तथाऽपि निष्पीड्य तत्तत्प्रकरणार्थः एकेनैव वाक्येन बोध्यते इति कृत्वा तत्त्वमसीत्यादिवाक्यानां महावाक्यसंज्ञा।

यथा वाक्यार्थे आकाङ्क्षायोग्यतासत्तीनां हेतुत्वं, तथैव महावाक्यार्थेऽपि आकाङ्क्षादीनां हेतुत्वम्। महावाक्यं वाक्यसदृशम्। अवान्तरवाक्यानि च पदसदृशानि। तथा च वाक्यार्थमहावाक्यार्थयोः पदार्थावान्तरवाक्यार्थयोश्च सादृश्यं सिद्धमेव। वाक्ये पदानामेकवाक्यतया यथैकार्थबोधकत्वं तथैव महावाक्येऽवान्तरवाक्यानामेकवाक्यतयैकार्थबोधकत्वम्। तच्च वाक्ये पदैकवाक्यतया महावाक्ये च वाक्यैकवाक्यतयेति विवेकः। यद्यपि तत्तच्छास्त्रेषु पदैकवाक्यतयाऽपि महावाक्यसिद्धिः प्रतिपादिता। तथाऽपि वाक्यैकवाक्यतैव सिद्धान्तत्वेनाङ्गीकृता प्रामाणिकैः। प्राशस्त्यनिन्दाबोधकपदैर्विधिवाक्यस्यैकवाक्यतया सिद्धे वाक्ये महावाक्यसंज्ञौपचारिकी। वाक्यसमुदायस्यैव महावाक्यसंज्ञेत्युक्तत्वात्।

शास्त्रसरणिः तत्तच्छास्त्रप्रतिपाद्यमंशं पुरस्कृत्य भिद्यते। उपदेशप्रकारस्तु सर्वेष्वपि शास्त्रेषु एकवाक्यतां पुरस्कृत्यैव वर्तते। एकवाक्यता च शास्त्रे वाक्यैकवाक्यतैव। शास्त्रस्य वाक्यसमुदायत्वेन महावाक्यरूपत्वात्। न ह्येकेनैव वाक्येन शास्त्रोपदेशः कर्तुं शक्यते। तस्मात् आर्थैकत्वं पुरस्कृत्य शास्त्रं महावाक्यरूपमिति वक्तुं शक्यते। एतच्च व्याकरणशास्त्रे पारिभाषिकमहावाक्यनिरूपणावसरे स्फुटी भविष्यति।

अर्थैकत्वं नाम प्रयोजनैक्यम्। तथा च यदि वाक्यसमुदायेन सर्वेणाप्येक एव विषयः प्रतिपाद्यते तर्हि स वाक्यसमुदाय एकं महावाक्यम्। "अर्थैकत्त्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्या"दिति जैमिनिसूत्रे[6] वाक्यशब्दः महावाक्यस्याप्युपलक्षणम्। तत्राऽपि अर्थैकत्त्वस्य, विभागे साकाङ्क्षत्वस्य च दृश्यमानत्वात्।

एवं च भाषायां सामान्येन महावाक्यस्वरूपं सुष्ठु गोचरं भवति। तच्च तत्तच्छास्त्रेषु प्रसङ्गवशेन विचारितः। तथाऽपि पिण्डीकृत्यैकत्र केनाऽपीतः पूर्वं न निरूपितः। लोकव्यवहारेऽपि वाक्यं महावाक्यमित्यादिप्रयोगः प्रायेण दृश्यत एव। परन्तु पारिभाषिकत्वेन शास्त्रदृष्ट्या च न तयोर्विश्लेषः क्रियते। शास्त्रेषु तु निष्कृष्टस्य सिद्धान्तस्य प्रतिपादनार्थं, समन्वयसम्पादनार्थं च तादृशो विचारः क्षोदक्षमः क्रियते। अपि चैतावत्पर्यन्तं लौकिकीं शास्त्रीयां च सरणिमनुसृत्य तादृशो विचारः नैकत्र पिण्डीकृत्य कृतः। तथा च तत्र तत्र पार्थक्येन स्थितानामंशानां क्रोडीकरणम्, शास्त्रीयेण प्रकारेण निरूपणम्, नूतनांशसमायोजनं चावश्यकमिति तदनुशीलनमत्र स्वीकृतम्।



## श्रीमते रामानुजाय नमः

नितान्तप्रमोदजनकमेतत् , यत् श्रीमता डा. कोराड सुब्रह्मण्यमहा भागेनास्मत् सुहृदा बहोः कालात् प्राक् प्रणीतः, शोधप्रबन्ध रूपोऽयं ग्रन्थः **"महावाक्य"** स्वरूपनिपकः, तदानीन्तनकाले एव लघुकायोऽप्यलघुगुणश्लाघनीय इति विद्वद्भिः सारग्राहिभिः बहुधा प्रशंसितः पूर्वप्रकाशितोऽपि पुनः प्राकाश्यमुपनीयमानः विदुषां निर्मत्सराणां प्रशंसामवश्यमेव प्राप्नुयादिति।

महावाक्यस्वरूपनिष्कर्षणे बहुदर्शनपरामर्शनस्यापरिहार्यत्वात्, श्रीमता सुब्रह्मण्यमहाभागेन सुपर्याप्तमेव दर्शनपरामर्शनं विधाय स्वग्रन्थस्य प्रामाण्यं परिवर्धितम् । एतस्य इदानीं दुर्लभप्रायस्य ग्रन्थस्य पुनः प्रकाशनेन विद्वद्वर्गाय महानेन उपकारः स्यादिति मन्वानः अहं मत्पितृपादस्मृत्यर्थं प्रकाश्यमानेषु ग्रन्थेषु अन्यतममिमं समायोज्य प्रकाशयामीति सप्रश्रयमावेदये।

शास्त्रपरामर्शप्रधानानां लघुकायानामप्यपूर्वाणां ग्रन्थानामुन्नयनं विधाय तत्प्रकाशनं यथाशक्ति कारयितव्यम् कर्तव्यमिति च भावना सर्वथा मनसि विपरिवर्तमाना जागर्ति। शास्त्रग्रन्थप्रोत्साहनस्य विरलविलायमानत्वात् लोके तावत् लब्धप्रतिष्ठानामेव क्रयविक्रयादि व्यापारोपकारिणामेव ग्रन्थानां प्रोत्साहकलाभात्, विषयगौरवभराणां ग्रन्थानां प्रकाशकालाभाच्च, अप्रकाशमानता बहुधा अनुभूयते। विषयगौरवभराणां ग्रन्थानां पर्यालोचयितारश्च क्रमशो विलुप्यन्त इति महत्खेदास्पदमेतत् ।

एतादृशदुर्दशातो शास्त्रग्रन्थानां बहिरुन्नयनं यैः वास्तवतया कर्तव्यं, येषां च तादृशार्थिकसामर्थ्यं निसर्गतो जागर्ति तेऽपि तूष्णींभावमेव

समाविष्कुर्वन्तीति विचारास्पदमेतत् । श्रीमद्वेङ्कटेश्वर देवस्थानेन तिरुमलस्थेन एतादृश कर्म विशेषतः कर्तव्यमस्ति। तेनैव देवस्थानेन बहोः कालात् प्राक् प्रकाशितानामुपनिषदादि ग्रन्थानां पुनः प्रकाशनापेक्षायां सत्यामपि, देवस्थानाधिकृतानां निरादरणबुध्या पुनर्मुद्रण प्रयत्नः बहुधा प्रार्थ्यमानोऽपि बधिरश्रवस्सङ्गीतायते इति भगवानेव अत्र शरणमिति प्रार्थयामहे ।

पूर्वमेव प्रकाशनाय स्वीकृतं आगमप्रामाण्यव्याख्यानमस्मद् भावुकचरणैः श्रीमदुभयवेदान्त श्रीमत्तिरुमल गुदिमेल्लान्तर्वेदि नृसिंहाचार्यैः प्रणीतं प्रथमं विधाय, श्रीलक्ष्मणार्यभव्यस्मृति ग्रन्थमालायामिदं पुस्तकं द्वितीयं विधीयत इति आवेद्य, एतत् विषये सुहृद्वरेभ्यः साभिनन्दनकृत ज्ञतास्समाविष्कुर्वन् विरमामि।

एवं विज्ञापयिता

**समुद्रालोपनामकः वेङ्कटरङ्गरामानुजाचार्यः**
जीवा - श्रीरामनगरम्, मुच्चिन्तल् ग्रामः
पालमाकुलपोस्ट (५०९३२५)
शंषाबाद् (म) आर्. आर् जि. (आं.प्र)
मो. ९४४१५६२८६३
९६७६८२५३६१



# प्रथमपरिच्छेदः

## (पूर्वमीमांसा)

अथ वाक्यशास्त्रमनुसृत्य महावाक्यविचारणा प्रस्तूयते। धर्ममूलं वेदः। स धर्मश्च यागादिरूपो चोदनया बोध्यते। चोदना प्ररोचना प्रेरणा इत्यनर्थान्तरम्। चोदना च आर्थभावनोपेतया शाब्दभावनया जायते। शाब्दभावना च साध्यं, साधनम् इतिकर्तव्यता इत्यंशत्रयमपेक्षते। आर्थभावनाऽपि साध्यसाधनेतिकर्तव्यतारूपांशत्रयोपेता। शाब्दभावनायाः साध्यमेवार्थभावना। आर्थभावनायाः साध्यं स्वर्गः, साधनं यागः, प्रयाजादिक्रियाजातमितिकर्तव्यता।

तत्र साध्यसाधनवाचकवाक्यानां "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादीनाम् इतिकर्तव्यतावाचकवाक्यैः "स्वाहाकारं यजती"त्यादिभिः वाक्यैकवाक्यतया शाब्दीभावना महावाक्यार्थरूपा जायते। तया भावनया प्रेरणा बोध्यते। ततश्च यागादिषु पुरुषस्य प्रवृत्तिः भवति। यागानुष्ठानेन च धर्मो लभ्यते। सेयं सरणिः पूर्वमीमांसायां सुष्ठु प्रतिपादिताऽस्ति। तथाहि - वेदार्थनिर्णयाय प्रवृत्तं शास्त्रं पूर्वमीमांसा। तस्या एव पूर्वकाण्डः वाक्यशास्त्रं पूर्वतन्त्रमिति च।

विधिमन्त्रनिषेधार्थवादनामधेयभेदात् वेदः पञ्चविधः। तत्र विधिवाक्यानि स्वतः प्रमाणानि। नामधेयार्थवादवाक्यानां तु न स्वतः प्रामाण्यम्।

तानि विध्येकवाक्यतयैव महावाक्यार्थबोधनद्वारा क्रियोपयोगित्वमुपगच्छन्ति। मन्त्रवाक्यानि तु कर्मणि विनियोगेन प्रामाण्यं लभन्ते। निषेधवाक्यानां चानिष्ट-कर्मणः सकाशान्निवृत्तिकरणद्वारा कर्मोपयोगित्त्वम्।

तत्र विध्यर्थज्ञापने सहकारिभूतानि षट् प्रमाणानि श्रुतिलिङ्गवाक्य-प्रकरणस्थानसमाख्यारूपाणि। एतेषां च प्रमाणानाम् उत्तरोत्तरं दौर्बल्यं, पूर्वपूर्वं च प्राबल्यम्।

उक्तप्रमाणेषु वाक्यशब्देन वाक्यं महावाक्यं चोद्दिष्टम्। "वाक्यं द्विविधं महावाक्यं चावान्तरवाक्यं चेति" इति बालमीमांसाप्रकाशकारः। "समभि-व्याहारो वाक्यम्"[1] इति वाक्यलक्षणम्। समभिव्याहारो नाम सामीप्यम्। तत्र वाक्ये पदानां महावाक्ये चावान्तरवाक्यानां शेषशेषिरूपाणामुच्चारणक्रिया-द्वारा सम्भवति। मीमांसकानां मते आख्यातार्थमुख्यविशेष्यकत्त्वरूपशाब्द-बोध एवात्र हेतुः।

यथा वाक्ये पदानाम् आकाङ्क्षावतां समन्वयेन वाक्यार्थः जायते, तथैव आकाङ्क्षावतामवान्तरवाक्यानां समन्वयेन महावाक्यार्थबोधो जायते। समन्वयश्च एकवाक्यतारूपः। एकवाक्यता नाम एकार्थबोधकत्वम्।

महावाक्ये द्विविधा एकवाक्यता दृश्यते। पदैकवाक्यता वाक्यैक-वाक्यता चेति। प्रधानवाक्यस्य (अङ्गिरूपस्य) पदकल्पेन (अङ्गरूप) गुण-वाक्येन सह एकवाक्यता पदैकवाक्यता। अङ्गाङ्गिवाक्ययोः शेषशेषिरूपयोः परस्परमेकवाक्यता वाक्यैकवाक्यता। सिद्धान्तत्वेन वाक्यैकवाक्यतैवाश्रिता पूर्वतन्त्रे।

एकवाक्यताविधायकं च जैमिनिसूत्रं - यजुःपरिमाणाधिकरणे[2] ..... "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादि"ति। सूत्रेऽर्थ शब्दस्य प्रयोजनमर्थः।

मीमांसकानां मते .... पदेभ्यः पदार्थाः ज्ञायन्ते। पदार्थसमुदायेनैव वाक्यार्थः बोध्यते। एवं च प्रकृते एकवाक्यतालक्षणे यावद्भिः पदैः एकं प्रयोजनमुद्दिष्टं तावतां पदानामेकवाक्यता। विभागे चावश्यं साकाङ्क्षैः अवयवैः भवितव्यम्। एतत्सूत्रं यजुः परिमाणनिश्चयार्थम् उक्तमपि लौकिकवाक्य-गतमप्यर्थैक्यं बोधयति। आह च कुमारिलः[3].... "यथा यथा हि सन्निकृष्टं न लभ्यते तथा तथा विप्रकृष्टे वेदशक्तिः सञ्चरति। तदिहोपकारककल्पना-प्रमाणम्। तेन शाखान्तरोक्तानामप्यङ्गानां प्रधानवाक्येन समभिव्याहारः।" एतेन वाक्यं महावाक्यं च व्याख्यातम्। तथाहि ........ "दर्शपूर्णमासाभ्यां स्वर्ग-कामो यजेत" इति प्रधानं फलबोधकं वाक्यम्। इदमेवाङ्गिवाक्यम्। "समिधो यजति", "तनूनपातं यजति" इत्यादि वाक्यानि अङ्गवाक्यानि। अत्र प्रधानवाक्ये "दर्शपूर्णमासाभ्यां स्वर्गकामः कथं यजेत" इति कथम्भावाकाङ्क्षा वर्तते। अङ्गवाक्येषु च "किञ्चैतेषां समित्तनूनपाद्यङ्गानां फलम्" इति फलाकाङ्क्षा वर्तते। उभयाकाङ्क्षा च प्रकरणं भवति। प्रकरणं च न साक्षाद्विनियोजकं, किन्तु वाक्यकल्पनाद्वारा। तथा च परस्पराकाङ्क्षावतोः अङ्गाङ्गिनोः समभिव्याहारो भवति। अर्थात् अङ्गाङ्गिभावं पुरस्कृत्य वाक्यानां परस्परसमन्वयेन महा-वाक्यसिद्धिः। तथा च एकवाक्यतामुपपद्य "समिदाद्यङ्गसहिताभ्यां दर्शपूर्ण-मासाभ्यां स्वर्गकामो यजेत" इति रूपेण एकं महावाक्यं सिध्यति। तच्च

महावाक्यं लिङ्गश्रुती कल्पयित्वा पुरुषस्य प्रयाजाद्यङ्गविशिष्टे दर्शपूर्णमास-करणीये यागे चोदनां जनयति। तदुक्तं बलाबलाधिकरणे कुमारिलेन[4]....

एकवाक्यतया यावत्सामर्थ्यमनुमीयते।
सामर्थ्येन श्रुतिस्तावत्कल्प्यते विनियोजिका॥

अत्राङ्गाङ्गिवाक्यान्येवावान्तरवाक्यानीत्यपि उच्यन्ते। तेषां चावान्तर-वाक्यानां स्वस्ववाक्यार्थे समाप्तिः यद्यपि दृश्यते तथापि एकार्थबोधकत्वात् वाक्यैकवाक्यतया तेषाम् एकमहावाक्यापादकत्वम्। तन्त्रवार्तिके च कुमारिलेनोक्तम्[5] ....

स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया।
वाक्यानामेकवाक्यत्वं पुनस्संहत्य जायते॥ इति।

अङ्गिन अङ्गापेक्षा, अङ्गस्याङ्ग्यपेक्षा च अङ्गाङ्गित्वव्यपेक्षा। पदानां यावतामर्थैक्यं दृश्यते तावतामेव एकवाक्यता। तत्र अवधिर्नास्ति। कुमारिलः विषयममुं प्रत्यपादयत् तन्त्रवार्तिके[6] .... "वाक्यैकत्वाच्चार्थैकत्वेऽव-धार्यमाणेवश्यमर्थनिरपेक्षं वाक्यैकत्वमवगन्तव्यम्। न च तस्यावधित्वेन किञ्चित्पश्यामो वर्णशतं वर्णसहस्रं वा। तथाहि .....

अज्ञातार्थेषु वर्णेषु बहुवाक्यैकवर्तिषु।
न कदाचिन्मतिर्दृष्टा वाक्येयत्त्वावधारणे॥
तस्मात्पदेषु यावत्सु श्रूयमाणेषु दृश्यते।
विस्पष्टमैक्यमर्थस्य तावतामेकवाक्यता॥

बहुवाक्यवर्तिषु एकवाक्यवर्तिषु वा वर्णेषु बहूनि वाक्यानि एकं वा इत्यवधारणा न दृष्टा इत्यर्थः।

बृहत्यां प्राभाकरमिश्रश्च प्राहैवम्[7] ..... "एकत्वे हि न वाक्यैकत्व एवावस्थितिः किन्तु सर्ववाक्यानामेकवाक्यता प्राप्नोति वर्णानामिव पदे, पदानामिव वाक्ये। कस्मात् एकत्वावगमादेव। भवति हि सर्ववाक्येषु शब्दः, शब्द इत्येषा बुद्धिः, सर्ववाक्यार्थेषु च शब्दार्थः शब्दार्थ इति। तदिदमभिन्नमेव ज्योतिष्टोमादिकर्मजातं प्राप्नोति" इति।

मीमांसकमते च अर्थैकत्वादेकवाक्यत्वे सिद्धे वाक्यान्तरकल्पना दोषः। अयमेव दोषः वाक्यभेद इत्युच्यते। तदुक्तं श्लोकवार्तिके[8] "सम्भवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते" इति। वाक्यभेदश्च नैकविधः वर्तते। तत्र अर्थैकत्वे वाक्यभेदो नाङ्गीक्रियते मीमांसकैः। अत एव शाबरभाष्ये बहुशः उक्तम्[9] ... "अर्थभेदाद्वाक्यभेदः", "द्वयोश्च विधीयमानयोः परस्परेणासम्बद्धयोः वाक्यभेदप्रसङ्गः" "अनेकविधितो हि वाक्यभेद उक्तः" "अनेकगुणविधानाद्वाक्यभेदः" इत्यादि।

कुमारिलेनोक्तं तन्त्रवार्तिके[10] .......

भावनैव हि वाक्यार्थः स्वकारकविशेषिता।
तस्याश्च ज्ञायते नित्यं भेदः शब्दान्तरादिभिः ॥

यस्मिन्पदसमूहे शब्दान्तरादिभिर्न भावानान्तरं प्रतिपाद्यते तस्यैकवाक्यत्वं भावनान्तरापेक्षया तु नानात्त्वम्" इति।

वाक्यभेदनिराकरणेन एकवाक्यताद्वारा महावाक्यार्थज्ञानाय पूर्वतन्त्रे बहुधा शेषशेषिभावाद्युपायाः आश्रिताः।

तन्त्रवार्तिकेऽप्युक्तम्[11] ... "एकवाक्यता च सति विशेषणविशेष्यभावे भवति, नान्यथा। सोऽपि च सामानाधिकरण्येन भवति समानविभक्त्यन्तानां, वैयधिकरण्येन वा क्रियाकारकरूपः, शेषशेषिरूपश्च" इति।

इदमत्र वक्तव्यम् .... यद्यपि प्रश्लिष्टपठितेषु यजुष्षु "इदमेकं यजुः" इति ज्ञानार्थम् अर्थैकत्वादेकं वाक्यमिति सूत्रमारब्धम्। तथाऽपि तदेव सूत्रम् इतरत्राऽपि एकवाक्यतानियमं बोधयति। उक्तं च कुमारिलेन प्रकृतसूत्रे[12] -

यजुर्भेदं च मुक्त्वैतद्वाक्यैकत्वस्य लक्षणम्।
मन्त्रब्राह्मणलोकेषु वक्तव्यं क्वोपयुज्यते॥ इति।

एतेन च यावता पदसमूहेन एकोऽर्थः बोध्यते तावान् पदसमूहः एकं वाक्यम् इति नियमः अभिव्यज्यते।

तत्र "स्वाध्यायोऽध्येतव्यः"[13] इति श्रुतौ सर्वस्य स्वाध्यायस्याध्ययनं विधीयते। तस्मात् सर्वस्याऽपि वेदवाक्यस्य यथा यथा धर्मसाधकत्वं भवति तथा तथा उपायाः कल्पनीयाः। बहुत्र महावाक्यकल्पनेनैव चोदना जायते। तस्मात् वाक्यानां परस्परमेकवाक्यता यथा भवति तथा न्यायाः प्रवर्तयितव्याः। तत्र तावच्छेषशेषिभावः। अर्थवादवाक्यानां विधिवाक्यैकवाक्यतयैवार्थवत्त्वम्। तथा च जैमिनिः[14] ... "विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनांस्युः" इति। विधिविषयाणां वायव्यं श्वेतमालभेतेति विषयीभूतानां वायुदेवतादीनां

या स्तुतिः, तदर्थे तत्सापेक्षेण तेन विधिना सह स्तावकवाक्यानामेकवाक्यत्वादीदृशानि वाक्यानि धर्मे प्रमाणानि स्युरिति सूत्रार्थः। स्तावकवाक्यानां तत्सदृशानां च अर्थवादा इति नाम।

अथमत्र सारः .... तैत्तरीयसंहितायामिदं समाम्नायते[15] .... वायव्यं श्वेतमालभेत भूमिकामः। "वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" इति। अत्र "वायव्यं श्वेतमालभेत-भूमिकामः" इति वाक्यं विदूध्युद्देशः। ततश्च शिष्टः वाक्यसमूहः अर्थवादनामकः लक्षणया वायुदेवतास्तुतिपरः। विधिवाक्येन च "भूमिकामः यजमानः श्वेतं वायवीयं पशुं संस्पृशेत्" इत्यर्थो लभ्यते। "वायुर्वै क्षेपिष्ठा देवता" इत्यादिना च वायोः प्राशस्त्यं ज्ञायते। "वायव्यं श्वेतमालभेत" इति विधिवाक्यस्य इतिकर्तव्यताकाङ्क्षा वर्तते। अर्थवादवाक्यैर्लब्धं प्राशस्त्यज्ञानम् इतिकर्तव्यताकाङ्क्षायामितिकर्तव्यतात्वेन सम्बध्यते। तेन विध्यर्थवादयोः वाक्यैकवाक्यता। तथा च "यतः शीघ्रकारिस्वभावतया शीघ्रफलप्रदः वायुः अस्य श्वेतपशोः देवता ततः प्रशस्तमिमं वायुदेवताकं पशुमैश्वर्यकामः संस्पृशेत्" इति महावाक्यार्थः सिदूध्यति।

विषयोऽयमत्र वैशद्यमर्हति पूर्वोक्ते वायुदेवताके अनुवाके विधिवाक्यमर्थवादवाक्यानि च अवान्तरवाक्यानि। तेषां परस्परं साकाङ्क्षत्वात् शेषशेषिभावेन वाक्यैकवाक्यतया महावाक्यत्वं सिद्धम्। अर्थवादाश्च विधिवाक्यशेषभूताः। तदुक्तं शाबरभाष्ये[16], वार्तिके[17], दुष्टीकायां[18] च .... येन विधीयते तस्य वाक्यशेष अर्थवाद इत्युक्तम्, वाक्यशेषो हि स (अर्थवादः)

भवति विधातव्यस्य, "न तावदर्थवादत्वं वाक्यशेषात् वा भावात्" "विधीयमानस्य च वाक्यशेषत्वेन स्तावकः अर्थवादो भवति" इत्यादि।

शेषशेषिणोरेकवाक्यता वैयधिकरणेन विशेषणविशेष्यभावो भवति। तदुक्तं तन्त्रवार्तिके[19] .... "एकवाक्यता च सति विशेषणविशेष्यभावे भवति, नान्यथा। सोऽपि च सामानाधिकरण्येन भवति समानविभक्त्यंशानां, वैयधिकरण्येन वा क्रियाकारकरूपः, शेषशेषिरूपश्च" इति। शेषशेषिभावे च समभिव्याहारादेतन्महावाक्यं प्रमाणं भवति इति।

अत्रेदं विचार्यते "महावाक्यस्यैव वा प्रामाण्यम् आहोस्विदवान्तरवाक्यानामपि प्रामाण्यम्" इति। तथाहि अवान्तरवाक्यगताकाङ्क्षाया उपशान्तिः महावाक्यार्थसिद्धिद्वारैव भवति। अन्याकाङ्क्षारहितमेव वाक्यं प्रमाणम्। तथा च सति महावाक्येऽवान्तरवाक्यानामाकाङ्क्षासहितत्त्वात् न प्रामाण्यम्। तदुक्तं शाबरभाष्ये[20] "न च महावाक्ये सति अवान्तरवाक्यं प्रमाणं भवति, पदान्तरस्य बाधनात् यथा "नोद्यन्तमादित्यमीक्षेत" इति प्रतिषेधो गम्यते महावाक्यात्, अवान्तरवाक्यादीक्षणविधानम्" इति। अत्र "उद्यन्तमादित्वमीक्षेत" इत्यवान्तरवाक्यं "न" पदेन सह साकाङ्क्षम्। तस्मान्न प्रमाणम्।

अस्मिन्विषये महासंख्यावान्तरसंख्यासादृश्यं चानीतं कुमारिलेन तन्त्रवार्तिके।[21] तथाहि .... "सर्वत्रावान्तरवाक्यानि महावाक्येष्वप्रमाणं, महासंख्यास्विवावान्तरसंख्या भवति इति। अयमस्य वाक्यस्य भावः ...."7, 946, 358" इत्यस्यां महासंख्यायां "79, 94, 463, 358" इत्यादीनामवान्तरसंख्यानां न प्रमाण्यम्। एवमेव अर्थवादवाक्यैरेकवाक्यीभूतस्य विधिवाक्य-

स्यैव प्रामाण्यम्। न त्वान्तरवाक्यस्य विधिवाक्यस्य, अर्थवादवाक्यस्य वा प्रत्येकं प्रामाण्यम्, परस्पराकाङ्क्षया तयोः विध्यर्थवादवाक्ययोः शेषशेषि-भावात्" इति।

यत्र च अर्थवादादिवाक्यैर्विना केवलं विधिवाक्यमवान्तरवाक्यं प्रयुज्यते तत्रावान्तरवाक्यस्यैव प्रामाण्यम्। एवञ्च विशेषणादिरहितस्यावान्तर-वाक्यस्य निराकाङ्क्षत्वात् प्रामाण्यम्। तदेतत्प्रतिपादितं सोदाहरणं शाबरभाष्ये तन्त्रवार्तिके च। शाबरभाष्येऽयं ग्रन्थो दृश्यते[22] .... "यथा पटो भवतीति पट उत्पद्यते इत्यर्थः। निराकाङ्क्षं च पदद्वयम्। यदा च तस्मिन्नेव "रक्त" इत्यपरं श्रूयते, तदा रागसम्बन्धो भवतीत्यर्थः। भवति च रक्तं प्रत्याकाङ्क्षा। एवं यदा न स्तुतिपदानि, विधिशब्देनैव तदा प्ररोचना, यदा स्तुतिवचनं तदा स्तवनेन ...." इति। तत्रैव तन्त्रवार्तिके कुमारिलः प्राह - "योग्यपदान्तरानुच्चारणेन हि सर्ववाक्यानि पर्यवस्यन्ति। तथा च यत्रोपलप्स्यन्ते तत्रैकवाक्यतां गमिष्यन्ते। तदिह - महावाक्येन विनावान्तरवाक्यस्य प्रामाण्यं तदभावे तु नेत्येतदाह - यदा न स्तुतिपदानीति। नन्वेवं सतीति। यत्र महावाक्यावान्तरवाक्ययोः फलं भिद्यते यथा पटभवनरागभवने, तत्रैव युक्तमिह त्वनतिरिक्तार्थस्य सतः किमवान्तरवाक्यनिराकरणमेव महावाक्यस्य युक्तं फलम् ? तदेतदाह यस्मिन्सत्यविधायकमवान्तरवाक्यं भवति मा भूत्तन्महावाक्यमिति। ..... यो नाम वेदस्य कर्ता स्यात्स एवं पर्यनुयुज्येत लघुनोपायेन सिद्धे किं महा-वाक्यमाश्रयसीति। तदभावान्न पर्यनुयोगः" इति।

एतेन च सति महावाक्ये, नावान्तरवाक्यस्य प्रामाण्यम्, असति महावाक्येऽवान्तरवाक्यमेव प्रमाणं भवतीति पूर्वमीमांसकाभिमतमिति निश्च-

प्रचं वक्तुं शक्यते। अत्रावान्तरवाक्यं नाम "विशेषणैर्विना निराकांक्षः प्ररोचनाजनकः पदसमुदायः इत्यर्थः" इति पटो भवतीत्यवान्तरवाक्योदाहरणेन गम्यते।

अर्थवादाश्च द्विविधाः, स्तुतिपराः, निन्दापराश्चेति। स्तुतिपराः विधिशेषाः, निन्दापराश्च निषेधशेषाः। तत्र स्तुतिपराणामर्थवादानां लक्षणया, गौण्या वा तत्तत्कर्मप्राशस्त्यबोधने तात्पर्यम्। "अर्थवादानामन्यपरत्त्वात् गौण्याऽवगतिः" इति प्रभाकरः[23]।

निन्दापराणामर्थवादानां च निषेधविध्येकवाक्यत्वेनार्थबोधः। तेषां परोक्षेण स्तुत्यकर्मणः प्राशस्त्यकथने एव तात्पर्यम्। न तु निन्द्यकर्मणो निन्दायाम्। अतएव शबरस्वामी शाखान्तराधिकरणे[24] .... "न हि निंन्दा निन्द्यं निन्दितुं प्रयुज्यते। किं तर्हि, निन्दितादितरत्प्रशंसितुम्। तत्र न निन्दितस्य प्रतिषेधो गम्यते किन्त्वितरस्य विधिः" इति।

तत्र "वायुर्वै क्षेपिष्ठा देवता" इत्यादीनामर्थवादानां वायव्ययागस्तुतिपरतया विधिशेषत्वम्। बर्हिषि रजतं न देयमित्यस्य निषेधस्य "सोऽरोदीत्" इत्यादयोऽर्थवादाश्शेषभूताः। तेन तयोः निषेधार्थवादवाक्ययोः परम्पराकाङ्क्षया एकवाक्यत्वम्। तेन च निषेधज्ञानबोधकवाक्यार्थसिद्धिः।

अथ सन्दिग्धार्थवादानां विषयः प्रस्तूयते। केचन अर्थवादाः सन्दिग्धाः वर्तते। यथा ... "बर्हिषि रजतं न देयम्"[25] इति निषेधस्य शेषभूताः सोऽरोदीद्यदरोदीदित्यादयः। तथैव "यः प्रजाकामः पशुकामो वा स्यात् स एतं प्राजापत्यं तूपरमालभेत" इति विधिना आकाङ्क्षितः "स आत्मनो वपामुद-

खिदत् इति अर्थवादः। एतादृशेषु प्रदेशेषु गौणार्थमाश्रित्य स्तुतिर्निन्दा वा बोध्येति समाहितं जैमिनिना[26] "गुणवादस्तु" इति सूत्रेण। यत्र यत्र प्रत्यक्षेण स्तुतिर्निन्दा वा न प्रभवति तत्र गौण्या वृत्या यथाकथञ्चित् स्तुतिपराणां वाक्यानां विधिशेषत्वं, निन्दापराणां निषेधशेषत्वं च बोध्यम्" इति सूत्रार्थः। तथाहि .... "बर्हिषि रजतं न देयम्" इति निषेधो वर्तते। सोऽरोदीदित्यादिवाक्यानि तस्य निषेधस्य शेषभूतानि। तदेतत्प्रतिपादितं शाबरभाष्ये[27] ... अथ सोऽरोदीदिति कस्य विधेः शेषः ? तस्मात् बर्हिषि रजतं न देयम् इत्यस्य। कुतः ? साकाङ्क्षत्वात् पदानाम्। सोऽरोदीद्यदरोदीत्तद्रुदस्य रुद्रत्वमित्यत्र स इति प्रकृताक्षेपः। तत्प्रत्ययात्। तस्य यदश्रवशीर्यतेति तस्येति पूर्वप्रकृताक्षेप एव। उपपत्तिश्चोपरितनस्य यो बर्हिषि रजतं दद्यात् पुराऽस्य संवत्सराद्गृहे रोदनं भवतीति। अस्य हेतुत्वेनायं प्रतिनिर्दिश्यते तस्माद्बर्हिषि रजतं न देयमित्येवं सर्वाणि साकाङ्क्षाणि कथं विधेरुपकुर्वन्तीति ? गुणवादेन। रोदनप्रभवं रजतं बर्हिषि ददतो रोदनमापद्यते। तत् प्रतिषेधस्य गुणो यदरोदनमिति। कथं पुनररुदति अरोदीदिति भवति, कथं वाऽनश्रुप्रभवे रजतेऽश्रुप्रभवमिति वचनम् ? पुराऽस्य संवत्सरादसति रोदने कथं रोदनम् भवतीति। तदुच्यते - गुणवादस्तु। गौणा एते शब्दाः। रुद्र इति रोदननिमित्तस्य शब्दस्य दर्शनाद्यदरोदीदित्युच्यते। वर्णसारूप्यान्निन्दन्ननश्रुप्रभवमप्यश्रुप्रभवमित्याह। निन्दन्नेव च धनत्यागे दुःखदर्शनात्पुरास्य संवत्सराद् गृहे रोदनं भवतीत्यप्याह" इति। एवं च यथाकथञ्चित् येनकेनचिदालम्बनेन निषेधवाक्यस्य तच्छेषभूतार्थवादवाक्यानां च उपकार्योपकारकभावेन एकवाक्यता कल्पनीया। तद्द्वारा शाब्दभावनारूपा महावाक्यार्थधीर्जायते। ततश्च पुरुषस्य निषिद्धकार्यान्निवर्तनम्।

एवमेव स्तुतिपरत्वं कल्पनीयं "स आत्मनोवपामुदखिदत्" इति वाक्यस्यापि। यः प्रजाकामः पशुकामो वा स्यात्स एवं प्राजापत्यं तूपरमालभेत इति विधेः शेषभूतः उक्तोऽर्थवादः। स्वात्मवपोत्खननेनाऽपि विशिष्टकर्माणि क्रियन्ते, किमुत बाह्यधनत्यागेन इति स्तुत्या अयमर्थवादः उक्तविधेश्शेषभूतः। तेन च शेषशेषिभावादेकवाक्यतया महावाक्यार्थधीरूपा शाब्दी भावना उत्पद्यते पुरुषस्य मनसि।

एवमेव यत्र यत्र अर्थवादानां साक्षात्तु स्तुतिनिन्दापरत्वेन विधिनिषेधयोः शेषत्वं साधयितुं न शक्यते तत्र तत्र सर्वत्रापि गौणी वृत्तिराश्रयणीया। "स्वाध्यायोऽध्येतव्यः" इति वाक्येन सर्वस्याऽपि वेदवाक्यस्य फलं वर्त्तत एवेति बोध्यम्। तस्मात् यथाकथञ्चित् वेदवाक्यानां प्रामाण्यं निर्वाह्यम्। तत्रार्थवादानां साक्षात्प्ररोचनाजनकत्वाभावात् विधिनिषेधशेषत्वं परिकल्प्य उपकार्योपकारकभावेन वाक्यैकवाक्यतां साधयेत्। इममेवार्थं गमयति गुणवादसूत्रम्।

एवं च "तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्"[28] इति सिद्धान्तसूत्रेण यत्प्रतिपादितं सर्वेषामपि पदानां साध्यसाधनेतिकर्तव्यताविशिष्टभावनार्थेन समुच्चारणमिति तदेव साधयितुं "गुणवादस्तु" इति सूत्रं निर्मितम्। अन्यथा क्रियार्थत्वाभावात् केषाञ्चनार्थवादानामानर्थक्यमापद्येत।

अथ उपक्रमोपसंहारौ निमित्तीकृत्य वाक्यैकवाक्यतया महावाक्यार्थसिद्धिर्निरूप्यते ..... वैश्वानरेष्ट्यधिकरणे उपक्रमोपसंहारौ निमित्तीकृत्य अष्टाकपालादिवाक्यानामर्थवादपरतया स्तावकत्वं परिकल्प्य द्वादशकपालाङ्गत्वं साधितम्। तेन चाङ्गाङ्गिभावनिमित्ता वाक्यैकवाक्यता। तथा च शब्द-

भावनारूपा महावाक्यार्थधीः समधिगता। तथा हि ..... तैत्तिरीयसंहितायां श्रूयते[29] .... "वैश्वनारं द्वादशकपालं निर्वपेत् पुत्रे जाते। यदष्टाकपालो भवति, गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपालो भवति, त्रिवृतैवास्मिन् तेजो दधाति यद्दशकपालो भवति विराजैवास्मिन् अन्नाद्यं दधाति, यदेकादशकपालो भवति, त्रिष्टुभैवास्मिन्निन्द्रियं दधाति, यद्द्वादशकपालो भवति जगत्यैवास्मिन् पशून् दधाति, यस्मिन् जाते एतामिष्टं निर्वपति, पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति" इति। सर्वं चेदं वैकल्पिकानेकसंख्याविशिष्ट-वैश्वानरविधानादेकमेवोत्पत्तिवाक्यम्।

तथा च मीमांसादर्शने[30] अष्टाकपालादीनां नामधेयत्वं निराकृत्य उपक्रमोपसंहाराभ्याम् एकवाक्यत्वं प्रतिपादितम्। अष्टाकपालादीनां गौण्या वृत्त्या द्वादशकपालस्तुतिपरत्वं च निरूपितम्। "पुत्रे जाते द्वादशकपालमि"ति यदेवोपक्रान्तं तदेवाष्टत्वादीनामन्ते "यद्द्वादश कपालो भवति" इति, "यस्मिन् जात एताम्" इति च उपसंह्रियते। तस्मात् अष्टाकपालादीनां न पृथग्वाक्यत्वम्। द्वादशकपालादिवाक्ये चाष्टाकपालादिवाक्यानां स्तुत्यर्थत्वं पुरस्कृत्यैव वाक्यैकवाक्यता। उपक्रमोपसंहाराभ्यामेकवाक्यतोक्ता तन्त्रवार्तिके[31] ....

वाक्यानि यावदर्थं स्वुर्गुणेभ्यः फलकल्पने।
एकोपक्रमसंहारादेकं चेदं प्रतीयते॥ इति।

एकार्थबोधकत्वेन एकफलकल्पकत्वेन, एकोपक्रमोपसंहारत्वेन चात्र वाक्यैक-वाक्यतया एकं महावाक्यं सञ्जातमिति श्लोकतात्पर्यम्।

स्तुतिश्चात्र "गुणवादस्तु" इति सूत्रप्रामाण्येन गौण्येव तद्यथाऽत्र अष्टाकपालादीनां प्रत्यक्षा स्तुतिः दृश्यते। सा च द्वादशकपालानां परोक्षा स्तुतिर्भवति। अयमत्रनिष्कर्षः ... द्वादशकपालादीनामङ्गभूताः अष्टा-कपालादयः। अतोऽङ्गाङ्गिभावेनैकवाक्यता। "एकदेशस्तुतिद्वारेण चैकदेशी स्तुतो भवती"ति कुमारिलः[32]। तदेतस्य प्रतिपादनायैव जैमिनिना एतत्सूत्रं व्यरचि यत्[33] .... "अविभागात् विधानार्थे स्तुत्यर्थेनोपपद्येरन्" इति। तत्रेदं भाष्यं शबरस्वामिनः .... "सन्ति हि द्वादशसंख्यायामष्टत्वादयः संख्या-विशेषा अविभक्ताः। अतो द्वादशकपालस्य स्तुत्यर्थत्वेनावयवस्तुतिरुपपद्यते। यथा शोभनमस्य चक्रस्य नेमितुम्बारं, शोभनमस्याः सेनायाः हस्त्यश्वरथ-पदातमिति। तस्मादुपपन्ना स्तुतिः" इति। प्रभाकरोऽप्येवमाह बृहत्याम्[34] ... "तस्मादापश्शान्ता इतिवदुपपन्ना स्तुतिः" इति। अयमस्यार्थः ... "वेतस-शाखयाऽवकाभिश्चाग्निं विकर्षती"ति वेतसावके विधीयेते "आपश्शान्ता" इति आपः स्तूयन्ते। विधेयोऽन्यः स्तुत्यश्चान्यः। तत्र "गुणवादस्तु" इति सूत्रेण गौणवादमाश्रित्य जैमिनिना समाहितम्। तथा च वेतसावकयोः अभिजनः आप इति अभिजनसंस्तवेन अभिजातः स्तुतो भवति।

अत्र च सर्वेषामपि स्तुतिवाक्यानां वैश्वानरप्ररोचनायामेवान्वयः। वैश्वानरयागस्यैव विद्ध्युद्देश्यत्वात्। स्तुतेश्च न किञ्चन परिमाणं भवति अल्पा वा भवेत् महती वा। सर्वत्रापि यथाकथञ्चित् वेदवाक्यानां सार्थकतासम्पादनाय विद्ध्युद्देशे साक्षात् परोक्षं वा अन्वयं परिकल्पयेत्।

तदेतत्स्पष्टीकृतं तन्त्रवार्तिके।[35] तथाहि .......

अष्टत्वाद्यविधानत्त्वाद् व्यर्थेयं तत्प्ररोचना।
तस्मादवयवद्वारं द्वादशत्वं प्ररोच्यते॥
स्तुतेरपरिमाणत्वाद्यावती हि प्रतीयते।
तां सर्वामैकरूप्येण विद्ध्युद्देशः प्रतीच्छति॥

अत्र समभिव्याहारादेव वाक्यं प्रमाणम्। तद्यथा अष्टाकपालादि वाक्यानि विधिवाक्यभूतद्वादशकपालवाक्यस्य समीपे उच्चारितानि। तेषां च विधिस्तुतिपरत्वेन अङ्गाङ्गिभावः। तथा च परस्पराकाङ्क्षायाः सत्वात् प्रकरणत्वम्। प्रकरणं च वाक्यं परिकल्पयति। तच्चात्र ..... ब्रह्मवर्चसादिसिद्धिद्वारा प्रशस्तैः अष्टाकपालादिभिर्युक्तं प्रशस्तं द्वादशकपालं वैश्वानरयागं कुर्वीत इति प्ररोचनरूपा महावाक्यधीर्जायते।

रथन्तराधिकरणे च विशेषणविशेष्यभावेन एकवाक्यतामाश्रित्य महावाक्यस्यैव प्रामाण्यमिति निरूपितम्।[36] तथाहि "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति ज्योतिष्टोमयागो विहितः। तं यागं प्रकृत्य श्रूयते ... "यदि रथन्तरसामा सोमः स्यात्, ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्, यदि जगत्सामा आग्रायणाग्रान् इति। तत्र सन्देहः ... किं ग्रहाग्रताविशेषो ज्योतिष्टोमस्य विधीयते, उत कर्मान्तरस्य रथन्तरसाम्नो बृहत् साम्नश्चेति। अत्र जैमिनेः पूर्वपक्षसूत्रं "गुणस्तु क्रतुसंयोगात् कर्मान्तरं प्रयोजयेत् संयोगस्याशेषभूतत्वात्" इति।

अत्रेदं विचार्यते ... यदि रथन्तरसामग्रहणेन च ज्योतिष्टोमोऽभिधीयते ततः ज्योतिष्टोमस्यैव ग्रहाग्रताविशेषः। अथ ज्योतिष्टोमो नाभिधीयते ग्रहाग्रताविशेषः कर्मान्तरस्य इति सिद्धम्।

अत्र "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति ज्योतिष्टोमविधायकवाक्यम्, विशेषवाक्यैः "यदि रथन्तरसामा सोमःस्यात्" इत्यादिभिः सह एकवाक्यतां प्राप्य महावाक्यमेव सत् प्रमाणं भवति। तस्मिंश्च महावाक्ये यागविधायकवाक्यस्य,विशेषवाक्यानाम् एकैकस्य चावान्तरवाक्यत्वम्। यत्र च महावाक्यं न विवक्षितं तत्रावान्तरवाक्यमेव प्रमाणं भवति इति प्रतिपादितपूर्वमेव। कौमारिलमपि मतमेतदेवेति वाक्यमेतत् सूचयति[37] .... "यद्यपि महावाक्येष्ववान्तरवाक्यान्यप्रमाणं, तथाप्यर्थासम्भवादविवक्षिते महावाक्येऽवान्तरवाक्याश्रयणाद्विधिशक्तेरबाधः" इति।

प्रकृते च रथन्तरसाम्नः, बृहत् साम्नश्च यदि ज्योतिष्टोमयागापेक्षया कर्मान्तरत्वेन विधिः स्यात् तदा विशेषवाक्येष्वेकैकस्य अवान्तरवाक्यभूतस्य प्रामाण्यं स्यात्। एवं व्यत्ययेनाऽपि। यदि विशेषवाक्येष्वेकैकस्य अवान्तरवाक्यभूतस्य प्रामाण्यं तर्हि रथन्तरादीनां त्रयाणां साम्नां विशिष्य विधिः, कर्मान्तरत्वेन।

अत एवमत्र निश्चीयते "रथन्तरशब्दः बृहत्सामशब्दश्च ज्योतिष्टोमस्य विशेषणम्। तथाच रथन्तरादिवाक्यानां गुणवाक्यत्वम्। तैश्च विशिष्टः ज्योतिष्टोमयागः उच्यते। विशेषणविशेष्यभावेन च एकवाक्यता" इति।

अस्मिन्विषये जैमिनेः सिद्धान्तसूत्रम्[38] .... "एकस्य तु लिङ्गभेदात्प्रयोजनार्थमुच्येतैकत्त्वं गुणवाक्यत्वात्" इति। गुणवाक्यत्वाद्रथन्तरवाक्यानां, ज्योतिष्टोमादिरेकमेव वाक्यं न रथन्तरादीनां कर्मान्तरत्वमिति भावः। एकवाक्यतया च ज्योतिष्टोमादिकस्य कर्मैकत्वम्। तदुक्तं तन्त्रवार्तिके[39] ....

"गुणवाक्यत्वाच्चाकर्मान्तरप्रत्यये सत्येकत्वं विज्ञायते। अथवा रथान्तरादि-विधिना ज्योतिष्टोमस्य गुणवाक्यैरेवमात्मकत्वं चोदितमिति नार्थान्तरत्त्वं प्रतीयते। ततश्च कर्मैकत्त्वम्" इति।

तत्र जगत्साम्नो विषये तु कुमारिलशबरस्वामिनोर्मतभेदो दृश्यते "जगत्साम, असम्भवात्कर्मान्तरं सम्भवति" इति शबरस्वामी। "........ जगत्सामत्वासम्भवात्तदिति वैषम्यम्। अपि च तत्राऽपि नैव पूर्वकर्मोत्पत्तिः, किं तर्हि, अप्रकृतस्य विषुवतो निमित्तत्वेन ग्रहणम्। तस्मान्निमित्तार्थानि सर्वाणि श्रवणानीति" इति कुमारिलः। तदेवं भाष्यकारमते रथन्तरबृहत्साम्नोरेव न कर्मान्तरत्वम्, किन्तु विशेषणपरतया ज्योतिष्टोमयागे निमित्तभूतत्वम्, जगत्साम्नस्तु कर्मान्तरत्वम्। वार्तिककारमते तु सर्वेषामपि रथन्तरबृबत्साम्नां न कर्मान्तरत्वं, किन्तु ज्योतिष्टोमेन सह कर्मैकत्वमेव इति फलति। रथन्तरादिः ज्योतिष्टोम एव न कर्मान्तरमिति यावत्।

एतेन च रथन्तरबृहज्जगत्साम्नां ज्योतिष्टोमेन सह सम्भूय कर्मैक्य-निष्पादनात् वाक्यैकवाक्यतया महावाक्यार्थधीरूपा शाब्दी भावना सिद्ध्यति।

तथा च "ज्योतिष्टोमेन स्वर्गकामो यजेत, यदि रथन्तरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् यदि बृहत्सामा शुक्राग्रान्, यदि जगत्
2 सामा आग्रायणाग्रान्".... इत्येकं महावाक्यं सिद्धम्।

यक्षानुवाके च मन्द्रादेः ऐकमन्त्र्यं गुणगुणिभावनिमित्तां वाक्यैक-वाक्यतामाश्रित्य असाधज्जैमिनिः। तथाहि .... "मन्द्राभिभूतिः केतुर्यज्ञानां

वांगूजुषाणा सोमस्य तृप्यतु। वसुमद्गणस्य सोमदेवते मतिविदः प्राप्तः सवनस्य गायत्रच्छन्दसोऽग्निष्टुतं इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामी"ऽति तत्रत्यो ग्रन्थः। तत्र सन्देहः। किं मन्द्रादिः तृप्यत्वित्येवमन्तः एको मन्त्रः वसुमद्गणादिरपरः। उत मन्द्रादिर्भक्षयाम्यन्त एक एव मन्त्र इति। तत्र जैमिनि-सूत्रम्[40]...... "गुणविधानान्मन्द्रादिरेकमन्त्रः स्यात्तयोरेकार्थसंयोगात्" इति।

गुणगुणिभावः विशेषणविशेष्यभाव इत्यनर्थान्तरम्। विशेषण-विशेष्यभावेन चात्र वाक्यैकवाक्यता। तथाहि - अस्मिन्मन्त्रे तृप्तिः भक्षण-विशेषणत्वेनाभिधीयते। यदि भक्षयामि वाक् तर्प्स्यसीति सम्बन्धः। तृप्यतु इति प्रार्थनायां प्राप्तकाले वा लोट्। अथवा भक्षयामि वाचस्तर्तुं प्राप्तः काल इति तेन च विशेषणविशेष्यभावादेकार्थत्वम्। "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" इति एकवाक्यता। सा च द्वयोर्वाक्ययोरिति वाक्यैक-वाक्यता। तथा च एकमन्त्ररूपैकमहावाक्यसिद्धिः।

अयमत्र सम्भाष्यो विषयः ... मन्द्रादिमन्त्रगतवाक्ययोर्यद्यपि न विभागे साकाङ्क्षत्वं दृश्यते। तथाऽपि सकलस्य मन्त्रस्य तृप्तिविशिष्टभक्षप्रकाश-नार्थकत्वं एकवाक्यतया इति न काचनासङ्गतिः। शबरस्वामी चैवं समाधत्ते[41] .... "यद्यप्येते वाक्ये भिन्नार्थे निराकाङ्क्षे द्वावर्थावभिवदेयाताम्, तथापि भक्षणस्य प्रकाशनं दृष्टं प्रयोजनं, न तर्पणस्येति कृत्वैकार्थ्यमेव भवेत्। किमङ्ग गुणभावे गम्यमान एवात्र। तस्मात् गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यादिति" इति। तथा निवीताधिकरणेऽपि च निवीतप्राचीनावीतयोः अर्थवादत्वकल्प-नया शेषशेषिभावेन विध्येकवाक्यत्वमसाधयन् मीमांसकाः। तेन च वाक्यैक-

वाक्यतया महावाक्यार्थरूपा शाब्दीभावना सिद्ध्यति। सन्दर्भोऽयमत्र द्रष्टव्यः ... दर्शपूर्णमासयोराम्नातं[42] .... "निवीतं मनुष्याणां प्राचीनावीतं पितॄणा-मुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुते इति। तत्र निवीतं मनुष्याणा-मित्यत्र सन्देहः.... किमयं विधिरुतार्थवाद इति। विधिश्चेत् "उपव्ययते देवलक्ष्ममेव तत् कुरुते" इति विधिवाक्येनैकवाक्यता। उभयविधाने वाक्य-भेदापत्तेः। किञ्च अङ्गाङ्गित्वरहितयोर्विध्योर्नैकवाक्यता। तदुक्तं शबरस्वामिना[43] ... "न हि विधेर्विधेश्चैकवाक्यता भवति। वचनव्यक्तिभेदात्" इति। भट्टकुमारिलश्च प्राह[44] ..... "न ह्यङ्गाङ्गित्वरहितयोरुभयोः स्वतन्त्रयोः परस्परासम्बद्धयोर्विधीयमानयोरेकवाक्यता भवति। वचनव्यक्तिभेदात्। अन्या हि प्रधानविधेस्तावन्मन्त्रोपसंहारिणी वचनव्यक्तिरन्या च स्तुतेः पराङ्ग-भावानुगतरूपा" इति। एतेन प्रकृतविषये "विधिनाचैकवाक्यत्वात्" इति जैमिनीयसिद्धान्तसूत्रेण "विधिना एकवाक्यत्वात् निवीतं मनुष्याणामिति-वाक्यस्यार्थवादत्वं वाक्यशेषत्वं च इत्यर्थः" इति निश्चिनुमः।

तथाचायं महावाक्यार्थः सिद्ध्यति .... "यथा निवीतप्राचीनावीते तत्तत्प्रधानकत्वसम्बन्धेन मनुष्यपितृसम्बन्धिना उचिते, तथा उपवीतमपि देवसम्बन्धितया प्रशस्तम्, तस्मात् दर्शपूर्णमासाख्यदेवकर्मणि उपव्यातव्यम्" इति।

अस्मिन्विषये भाष्यकारेण[45], वार्तिककारेण[46] च उपमानद्वयं प्रकल्पितम्। तथाहि .... "यथा यादृशोऽस्य वेषस्तादृशो नटानां, यादृशो देवदत्तस्य तादृशो ब्राह्मणानामिति देवदत्तवेषप्रशंसार्थमितरवेषसङ्कीर्तनम्। एवमिहापि उपव्यान-

स्तुत्यर्थेन निवीतसङ्कीर्तनम्" इति शबरस्वामी। भट्टकुमारिलश्च... "तस्मादौ-चित्येन स्तुतिः। यथा निवीतप्राचीनावीते मनुष्याणां पितॄणां च प्रशस्ते तथोपवीतं देवानामिति। लोकेऽपि चैवं हि दृश्यते। यथा वसिष्ठस्य अरुन्धती, यथा शशाङ्कस्य रोहिणी, यथा नलस्य दमयन्ती, तथा देवदत्तस्य यज्ञदत्तेति। विपर्ययेण वा स्तुतिरिति" इति।

अतएव "स्तुतिर्निवीतं विहितोपवीतेः" इति मीमांसानुक्रमण्यां मण्डनमिश्रस्य वचनं सङ्गच्छते। विधिभूतस्य उपव्यानस्य "निवीते मनुष्याणाम्" इति वाक्यं स्तुतिभूतम्। तेन "विधिनात्वेकवाक्यत्वा"दिति वाक्यशेषत्वं निवीतस्य। एवं शेषशेषिणोरेकवाक्यता।

अपि च दिग्विभागाधिकरणे निवीताधिकरणे इव विधिव्यतिरिक्त-वाक्यानामर्थवादत्वं परिकल्प्य शेषशेषिभावेनैकवाक्यतामकल्पयज्जैमिनिः। तथाहि - ज्योतिष्टोमं प्रकृत्य श्रूयते .... "प्राचीं देवा अभजन्त दक्षिणां पितरः प्रतीचीं मनुष्याः उदीचीमसुरा" इति। तत्र "प्राचीनवंशं करोति" इति विधिः। अयमत्र सन्देहः किं सर्वं "दिग्विभागवाक्यमर्थवादः विधिर्वा" इति। अत्र जैमिनिसूत्रम्[47] ... "दिग्विभागश्च तद्वत् सम्बन्धस्यार्थहेतुत्वात्" इति। तद्वदित्यस्य निवीतवदित्यर्थः। यथा उपवीतस्य "निवीतं मनुष्याणामित्यादि-वाक्यमर्थवादभूतम् एवमत्राऽपि सर्वस्यापि दिग्वाक्यस्य प्राचीनवंशं करोतीऽति विधिवाक्यापेक्षया अर्थवादत्वं प्रकल्पयेत्" इति। यादृशी विचारणा निवीता-धिकरणे कृता तादृश्येव विचारणाऽत्रापि दिग्विभागाधिकरणे कर्तव्या इति भावः।

"यथा असुराः (रुद्राः) उदीचीं दिशं, मनुष्याः प्रतीचीं पितरश्च दक्षिणाम् अभजन्त एवमेव वेदाः प्राचीं दिशम् अभजन्त" इति प्राची दिक् प्रशस्ता, तस्मात् प्राचीनवंशं करोति इति महावाक्यं सिद्धम्। एतेन दिग्विभागवाक्यस्य सर्वस्याप्यर्थवादत्वेन वाक्यशेषत्वं, शेषशेषिभावेन च वाक्यैकवाक्यतया महावाक्यार्थबोधरूपा चोदना च सिद्ध्यति।

सायणाचार्यश्च जैमिनीन्यायमालाविस्तरे अमुमेव विषयं समगृह्णीत[48]..

दिशं प्रतीचीं मनुजा व्यभजन्तेत्यसौ विधिः।
वादो वाऽत्र पुराकल्पस्तुत्यर्थो विधिमर्हति॥
प्राचीनवंशवाक्योक्तेः विधावस्यैकवाक्यतः।
दिग्विभागोऽर्थवादोऽयमुपवीते निवीतवत्॥

यथा निवीताधिकरणे, दिग्विभागाधिकरणे च विधिभिन्नवाक्यानामर्थवादत्वकल्पनया विध्येकवाक्यता तथैव परुषिदिताधिकरणेऽपि विधिवाक्यभिन्नवाक्यजातस्यार्थवादतां प्राकल्पयन्मीमांसकाः। तेन च न विधिद्वयप्रसक्तिरिति न वाक्यभेदापत्तिः। अर्थवादत्वेन च विधिशेषत्वं, शेषशेषिभावेन च एकवाक्यता सिद्ध्यति। तथा च महावाक्यार्थ रूपा चोदना बहुशः प्रदर्शितैव।

एवं हि दर्शपूर्णमासयोः श्रूयते[49].... "यत्पुरुषिदितं तद्देवानां, यदन्तरा तन्मुष्याणां, यत्समूलं तत्पितॄणाम्" इति। "यो विदग्धः स नैर्ऋतः, योऽशृतः स रौद्रः, यः शृतः स देवः। तस्माददविदहता श्रपयितव्यं सदेवत्वाय" इति। ज्योतिष्टोमे श्रूयते[50] .... "यत्पूर्णं तन्मनुष्याणामुपर्यर्धो देवानामथ पितॄणाम्"

इति। तत्र मनुष्यसम्बद्धेषु रौद्रे च सन्देहः .... किं तानि विधिवाक्यानि, अहोस्विदर्थवादाः इति। तत्र जैमिनिरेवमसूत्रयत्[51]... "परुषिदितघृतपूर्ण-घृतविदग्धं च तद्वत्" इति। तद्वत् इत्यस्य निवीतवदित्यर्थः। यथा निवीतप्रकरणे पूर्वपक्षमध्यमसिद्धान्ताः कृता एवमत्राऽपि इति यावत्। परुषिदितघृतपूर्ण-घृतविदग्धं च द्रव्यम्, तद्बोधकं वाक्यजातम्, तद्वत् निवीतवत् न विधिः, किन्त्वर्थवादः। "पर्व प्रति लुनाति" "उपरिबिलाद्गृह्णति" "नवनीतेनाभ्यङ्क्ते" "अविदहता श्रपयितव्यम्"[52] इत्येतैर्विधिवाक्यैरेकवाक्यत्वात्, प्रकरणाच्च। तस्मादेते न विधयः किन्त्वर्थवादाः इति सिद्धान्तः।

तथा च "यथा यत् परुषिदितं तद्देवानां प्रशस्तं, यच्च समूलं दितं तत् पितॄणां प्रशस्तं, यच्च अन्तरा दितं तन्मनुष्याणां प्रशस्तम् इति पर्व प्रति लुनाति" इत्येकं चोदनावाक्यं समभवत्। एवं यथा यदुपर्यर्धस्तद्देवानां प्रशस्तं, यच्च पूर्णं तन्मनुष्याणां प्रशस्तमिति उपरि बिलाद्गृह्णाति; यो विदग्धः स नैर्ऋतः यो अशृतः स रौद्रः यः शृतः स देवत्य इति हेतोः सदेवत्वाच्च अविदहता श्रपयितव्यम्; यथा देवानां घृतं प्रशस्तं, पितॄणां च मस्तु प्रशस्तं तथा मनुष्याणां च निष्पक्वं नवनीतशब्दवाच्यं प्रशस्तमिति नवनीतेनाभ्यङ्क्ते इति एतानि महावाक्यानि सिद्ध्यन्ति।

तथैव चतुर्थाध्याये फलश्रुतीनामर्थवादत्वमुक्तम्। अर्थवादानां च द्रव्यसंस्कारकर्मवाचकपदैरेकवाक्यतया महावाक्यार्थरूपचोदनाकल्पनायां तात्पर्यमिति प्रतिपादितमेव।

तथा हि .... "द्रव्यसंस्कारकर्मसु फलार्थत्वात्फलश्रुतिरर्थवादःस्यात्" इति सूत्रम्।[53] द्रव्येषु, संस्कारेषु अङ्गकर्मसु या फलस्य श्रुतिः वर्तते सोऽर्थवाद-

स्स्याद्यतः द्रव्यसंस्कारकर्मणां क्रत्वर्थत्वम्, न तु पुरुषार्थत्वम्। "पुरुषार्थत्वे एव विधिः" इति सूत्रस्यार्थः। तत्र चैवं विन्यासः।

द्रव्यम् .... "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इति द्रव्ये पलाशरूपे (पर्णापरपर्याये) फलश्रुतिः। एतेन पलाशपर्णस्य प्राशस्त्यं बोधितं भवति। पर्णमयी जुहूर्भवति चेत् पापं श्लोकं न श्रुणोति जन इति हेतोः पलाशवृक्षः प्रशस्तः इति महावाक्यार्थः।

संस्कारः ... "यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते" इति नेत्राञ्जनरूपे संस्कारे फलश्रुतिः। नेत्रयोरञ्जनकरणसंस्कारेण शत्रुनाशनसामर्थ्यं लभ्यते इति हेतोः नेत्राञ्जनसंस्कारः प्रशस्तः इति महावाक्यार्थः फलति।

कर्म .... यत्प्रयाजानुजाया इज्यन्ते कर्म वा एतद्यज्ञस्य क्रियते कर्म यजमानस्य भ्रातृव्याभिभूत्यै इति प्रयाजादिरूपे कर्मणि फलश्रुतिः। "शत्रूणां पराभवाय कल्पन्ते इति कृत्वा प्रयाजानुयाजाः यजमानस्य यज्ञस्य च कवच-भूताः, तस्मात्ते प्रशस्ताः इति" महावाक्यार्थः सिद्ध्यति।

अत एव शब्दकौस्तुभे दृश्यते[54] .... "द्रव्यसंस्कारकर्मसु परार्थत्वात्" इति न्यायेन, "तेऽसुरा हेऽलयो हेऽलय इति कुर्वन्तः पराबभूवुः" इति अर्थवादेन "ब्राह्मणेन न म्लेच्छितवै" इति क्रत्वङ्गनिषेधस्य प्राशस्त्यमात्रं बोध्यत इति। एवं यत्र यत्र फलश्रुतिः दृश्यते तत्र तत्र तस्याः अर्थवादत्वकल्पनेन द्रव्यसंस्कार-कर्मभिरेकवाक्यता साधनीया।

सोमयागप्राधान्याधिकरणे उत्पत्तिवाक्यानां गुणैः समभिव्याहारात् सोमस्यैव प्राधान्यं प्रतिपादितम्। तेन प्रधानभूतस्य सोमयागविधायक-

वाक्यस्य, गुणभूतैः इतरयागविधायकवाक्यैरेकवाक्यतया गुणगुणिभाव-निमित्ता महावाक्यत्वसिद्धिः। तथाहि .... "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति ज्योतिष्टोमोऽस्ति। तत्र दीक्षणीयादयश्च यागाः विद्यन्ते, सौत्ये चाहनि सोमयागः। तत्र सन्देहः, "किमत्र सर्वोऽपि यागः प्रधानम्? उत सोमयागः" इति। ज्योतिष्टोमे सर्वे यागाः तुल्याः, अविशिष्टत्वात्। यागात् फलं श्रूयते, फलवच्च प्रधानमिति कृत्वा सर्वे यागाः प्रधानमिति प्राप्तम्। तच्च पूर्वपक्षीकृत्य "गुणानां तूत्पत्तिवाक्येन सम्बन्धात् कारणश्रुतिस्तस्मात्सोमः प्रधानं स्यात्" इति सूत्रेण[55] ज्योतिष्टोमे सोमयागः प्रधानम्, इतरदङ्गम् इति सिद्धान्तितं जैमिनिना।

"ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्युत्पत्तिवाक्यात् ज्योतिष्टोमस्य स्वर्गः फलत्वेन श्रूयते। न तु सर्वेभ्योऽपि यागेभ्यः। सोमयागस्य ज्योतींषि यानि स्तोमानि तान्येवात्र गुणाः। गुणाश्चाङ्गभूताः। आम्नायते च .... "कतमानि वा एतानि ज्योतींषि, य एतस्य सोमाः त्रिवृत्पञ्चदशसप्तदशैकविंशः। एतानि वा ज्योतींऽषि। तान्येतस्य सोमाः" इति। "ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्र-मुपकरोति" इति समभिव्याहारात् स्तोमाः सोमयागस्य अङ्गम्। तस्मात् त्रिवृदादि-स्तोमकः सोमयागः, स ज्योतिष्टोम इति सिद्ध्यति। ज्योतिष्टोमादेव स्वर्गरूपं फलम्। यस्माच्च फलं सिद्ध्यति तदेव प्रधानमिति नियमेन सोमयाग एव प्रधानमिति फलति। दीक्षणीयादीनां ज्योतिष्टोमशब्देन नैव ग्रहणं, प्राधान्यं वा।

अत एव शास्त्रदीपिकायामुक्तम्[56] .....

ज्योतिष्टोमाभिधानस्य यागस्यात्र फलं श्रुतम्।
ज्योतिष्टोमपदं चेदं वाक्यशेषे निरुच्यते॥

प्रसिद्धरूपे सति सोमयागे न दीक्षणीयादिषु वर्तते तत्।
ततः स एवेह फलान्वयेन प्रधानमन्ये तु तदङ्गभूताः ।। इति।

तथा च "त्रिवृत्पञ्चदशसप्तदशैकविंशसंख्याकानि ज्योतींषि स्तोम-रूपाणि यागे सन्ति तेन ज्योतिष्टोमेन स्वर्गकामो यजेत" इति महावाक्यार्थः सिद्ध्यति। एवं च ज्योतिष्टोमयागस्य प्राधान्येन, अङ्गभूतानां त्रिवृदादीनां तस्मिन्नङ्गाङ्गिभावेन चान्वयः। एतस्मादङ्गबोधकवाक्येन सह वाक्यैकवाक्य-तया महावाक्यार्थरूपा चोदना सञ्जायते।

षष्ठाध्याये "ज्योतिष्टोमे होमाभिषवौ सहितौ एकं भक्षिनिमित्तम्" इति प्रतिपादितम्। तथा च एकार्थविधायकत्वादेकवाक्यता। तेन "अभिषुत्य हुत्वा भक्षयन्ति" इति एकं महावाक्यं भवति। अयमत्र ग्रन्थसन्दर्भः - ज्योति-ष्टोमे श्रूयते .... "हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदभिभक्षान् भक्षयन्ति" इति। अत्र "अभिषुत्य हुत्वा भक्षयन्ति" इत्यत्र विचारणा प्रवर्तते। किमेकेनैव भक्षणीयम्, उतान्यतरेणाऽपि भक्षणीयमिति। तत्र होमाभिषवौ द्वावपि भक्षणे निमित्तें भवतः। न त्वेकैकः। तथा च जैमिनिरपि[57] "उभाभ्यां वा न हि तयोर्धर्मशास्त्रम्" इति सूत्रयामास। एकस्यैव अर्थस्य भक्षणरूपस्य विधीयमानत्वात् "अर्थैकत्वादेकं वाक्यम्" इत्येकवाक्यता। सा च वाक्यैकवाक्यतैव। "अभिषुत्य हुत्वा भक्षयन्ति" इत्यस्मिन् महावाक्ये हुत्वा भक्षयन्तीति अवान्तरवाक्यम्। "सति महावाक्ये नावान्तरवाक्यस्य प्रामाण्यम्" इति प्रतिपादितमेव पूर्वम्। महावाक्येन अभिषुत्य हुत्वा इति उभयक्रिया-संयुक्तता भक्षणस्य ज्ञायते इति कृत्वा उभयनिमित्तत्वं सङ्गच्छते। अयमत्र

क्रमः .... भक्षणस्य विधानमाश्रित्य अर्थैकत्वम्। अर्थैकत्वात् अभिषुत्य हुत्वा भक्षयन्तीत्येकं महावाक्यम्। महावाक्येन च अभिषवहवनरूपक्रिया-द्वयनिमित्तता भक्षणस्य निरूप्यते। "महावाक्येऽवान्तरवाक्यस्य न प्रामाण्यम् इति नियमात् नैकनिमित्तत्वम् भक्षणस्य" इति गम्यते। शाबरभाष्ये चैवं प्रत्यपादि[58] .... तदेतावति पर्यवसितं भवति, अभिषुत्य हुत्वा भक्षयन्तीति तत्रैतदवान्तरं वाक्यं हुत्वा भक्षयन्तीति। न च महावाक्ये सति अवान्तरवाक्यं प्रमाणं भवति, पदान्तरस्य बाधनात्। यथा "नोद्यन्तमादित्यमीक्षेत" इति प्रतिषेधो गम्यते महावाक्यात्, अवान्तरवाक्यादीक्षणविधानम्। तस्मादन्यतर-निमित्तं भक्षणमश्रुतम्। महावाक्यादिदमवगम्यते, द्वे निमित्ते भक्षणस्येति। भक्षणं चान्यथा कुर्वन् श्रुतं परित्यजेत्। तस्मादुभाभ्यां निमित्ताभ्यां भक्षणमिति" इति।

एतावता च अभिषवहोमयोरुभयोरपि भक्षणे निमित्तत्वेन, एककर्तृ-कत्वेन च यः अभिषवहोमौ कुर्यात् स एव भक्षान् भक्षयेत् इति होमाभिषव-कर्तैव भक्षाङ्गत्वेन चोद्यते इति च सिद्ध्यति।

परकृतिपुराकल्पानामर्थवादत्वं सिषाधयिषुणा जैमिनिना, तेषां विध्येकवाक्यताद्वारा महावाक्यार्थभूतबोधनायामन्वयः उद्दिष्ट इति प्रतिभाति। तथाहि .... एककर्तृक वृत्तान्तकथनरूपा परकृतिः। बहुकर्तृकवृत्तान्तकथन-परः पुराकल्पः।

दर्शपूर्णमासयोः "तस्मादारण्यमेवाश्नीयात्" इति आरण्याशनविधिं प्रकृत्य श्रूयते इति ह स्माह "बट्कुर्वार्ष्णिर्माषान्मे पचत न वा एतेषां हविर्गृह्णन्ति" इति। एतच्च एककर्तृकवृत्तान्तपरत्वात् परकृतिः। "एवं गृहपतेरेवाग्निषु

निर्मन्थ्य निर्वपेरन्" इति विधिवाक्यं प्रकृत्य श्रूयते "उल्मुकैस्सह पूर्वे समाजग्मुः, तानुसारा रक्षांसि निजघ्नुः" इति पुराकल्पः। तत्र संशयः .... किमेतादृशाः पराकृतिपुराकल्पाः विधिबोधकाः उत विधिविशेषभूताः इति।

यद्यपि औदुम्बराधिकरणे "उक्तं च वाक्यशेषत्वम्"[59] इति सूत्रेण एतादृशानां वाक्यानां विधिवाक्यशेषत्वेनार्थवादत्वं प्रत्यपादि। तथाऽपि विशेषेणात्र षष्ठाध्याये परकृतिपुराकल्पवाक्यानामर्थवादत्वं प्रतिपाद्यते। तथा च सूत्रम्[60] .... "अर्थवादो वा विधिशेषत्वात्तस्मान्नित्यानुवादः स्यात्" इति। "परकृतिपुराकल्पाश्च विधिशेषभूता" इति अर्थवादाः तस्मान्नित्यानुवादाः न विधयः इति सूत्रार्थः। अर्थवादत्वाङ्गीकरणे च तत्तत्परकृतिपुराकल्पवाक्यानां "विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः" इति सूत्रप्रामाण्येण तत्त-द्विधिवाक्यैः सह वाक्यैकवाक्यता साध्यते। तद्द्वारा च महावाक्यार्थरूपा शाब्दीभावना सञ्जायते इत्युक्तपूर्वमेव।

प्रस्तुते च "इति ह स्माह बट्कुर्वार्ष्णिः माषान्मे पचत, न वा एतेषां हविर्गृह्णन्ति" इति परकृतेः प्राशस्त्ये लक्षणा। तथा च "आरण्यं प्रशस्तं, तस्मादारण्यमेवाश्नीयात्" इति महावाक्यं सिद्धम्। "उल्मुकैस्सह पूर्वे समाजग्मुः, तानसुरा रक्षांसि निजघ्नुः" इति पुराकल्पस्य उल्मुकसंसर्गनिन्दनद्वारा निर्मन्थ्या-ग्निसंसर्गस्तुतौ लक्षणा। निन्दा च न निन्द्यं निन्दितुम्, अपि तु परोक्षेण स्तुत्यं स्तोतुम् इति निन्दार्थवादस्यात्र निर्मन्थ्याग्निसंसर्गस्तुतावेव तात्पर्यम्। तदुक्तं शाबरभाष्ये शाखान्तराधिकरणे[61] .... "न हि निन्दा निन्द्यं निन्दितुं प्रयुज्यते। किं तर्हि? निन्दितादितरत्प्रशंसितुम्" इति। एतेन च गृहपतेरेवाग्निषु प्रशस्त-त्वात् निर्मन्थ्य निर्वपेरन् इति महावाक्यं सिद्धम्।

नवमाध्याये, "ऋचा स्तुवते साम्ना स्तुवते" इति ऋचा साम्नाऽपि स्तुतिविधेः विकल्पे सिद्धे ऋक्स्तुतिवाचकवाक्यस्यार्थवादतां परिकल्प्य "साम्ना स्तुवते" इति विधिना एकवाक्यता परिकल्पिता। तथा च शेषशेषि-भावेन वाक्यैकवाक्यतया महावाक्यार्थबोधः। तथाहि - कर्मविशेषे श्रूयते "ऋचा स्तुवते", "साम्ना स्तुवते", "यदृचा स्तुवते तदसुरा अन्ववायन् यत्साम्ना स्तुवते तदसुरा नान्ववायन्। य एवं विद्वान् साम्ना स्तुवीत" इति। अत्रायं संशयः ..... किमृचा स्तोतव्यं साम्ना वा ? आहोस्वित्साम्नैव वा इति। द्वाभ्यामपि स्तुत्योरुक्तत्वात् "ऋचा स्तोतव्यम्, साम्ना वा" इति विकल्पे प्राप्ते तत्र समाधत्ते जैमिनिः[62] .... "वचनाद्विनियोगः स्यात्" इति सूत्रेण। अत्र वचनशब्देन "य एवं विद्वान् साम्ना स्तुवीत इत्युपसंहारवाक्यं गृह्यते। तच्च वाक्यं साम्ना स्तवनस्य विधौ विनियोजकम्।

अत्र "यदृचा स्तुवते तदसुरा अन्ववायन्, यत्साम्ना स्तुवते तदसुरा नान्ववायन्" इति साम्ना स्तुतिः प्रशस्यते प्रत्यक्षेण प्रशंसावचनेन। "यदृचा स्तुवते" इत्यादिवाक्यमसुरागमननिन्दाद्वारेण साम्ना सह वाक्यैकवाक्यतां याति। तथा च "ऋचा स्तुतौ असुरा आगताः, साम्ना स्तुतौ तु असुरा नागताः। असुराणामनागमनं च वाञ्छितम्? तस्मात् प्रशस्ता साम्ना स्तुतिः" इति प्रशस्त्यबोधप्रकारः। तेन च "प्रशस्तत्वात् साम्ना स्तुवीत" इति महावाक्यं सिद्ध्यति। तेन च साम्ना स्तवने चोदना बोध्यते।

अपि च आरम्भणीयाधिकरणे दर्शपूर्णमासयोः आरम्भणीयेष्टयाः अङ्गत्वं परिकल्प्य, आरम्भणीयायाम् आरम्भणीया नास्ति इति सिद्धान्तितम्,

"न वा अङ्गभूतत्वात्" इति सूत्रेण।[63] अत्र दर्शपूर्णमासयोः, प्रयाजानुयाजानाम् इवारम्भणीयायाः अङ्गत्वेन अङ्गाङ्गिभावकृता परस्पराकाङ्क्षा सम्भवति। उभयाकाङ्क्षा च प्रकरणम्। प्रकरणं न साक्षाद्विनियोजकं, किन्तु एकवाक्यतया महावाक्यकल्पनाद्वारा विनियोजकम्।

अयमत्र सन्दर्भः ... "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति दर्शपूर्णमासौ विहितौ। तत्रारम्भणीयेष्टिः समाम्नातेत्थम्.... "आग्नावैष्णवमेकादशकपालं निर्वपेत्, सरस्वत्यै चरुं, सारस्वते द्वादशकपालम्, अग्नये भगिनेऽष्टाकपालं निर्वपेद्यः कामयेत्तत्रादः स्यामिति नित्यवदेके भगिनमामनन्ति" इति। तत्र सांशयिकोऽर्थश्चायम्.... किमारम्भणीयायाम् आरम्भणीया कर्तव्या उत नेति। आरम्भणीयायाम् आरम्भणीयायाः बाधः इति सिद्धान्तः। तथाहि - स्तो दर्शपूर्णमासौ "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति। तत्र तयोः कथम्भावाकांक्षा वर्तते "कथं दर्शपूर्णमासाभ्यां यागं भावयेत्" इति। तथैव "आग्नावैष्णवमेकादशकपालं निर्वपेत्" इत्यादिवाक्यविहितारम्भणीयेष्टिः वर्तते। तस्याश्च किमर्थमारम्भणीयेष्टिः इति धर्माकांक्षा वर्तते। तथा चानयोः उभयाकाङ्क्षया प्रकरणविषयता। तेन च अङ्गाङ्गिभावनिमित्ता वाक्यैकवाक्यता। तथा च "आरम्भणीययागविशिष्टाभ्यां दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति महावाक्यं सिद्ध्यति।

उक्तं च टुप्टीकायां कुमारिलेन[64] .... "अङ्गं चेदं कथम्भावपरिपूर्णा आरम्भणीया विधीयते सा च दर्शपूर्णमासधर्मानाकाङ्क्षति" इति।

अङ्गाङ्गिभावेन उभयाकांक्षारूपं प्रकरणं सिद्ध्यति। "प्रकरणं च न साक्षात् विनियोजकम्। किन्त्वेकवाक्यतया महावाक्यकल्पनेन" इति प्रत्यपादयाम। अङ्गाङ्गिभावो नाम उपकार्योपकारकभावे एव भवति। तदुक्तम्[65] ... "उपकारापेक्षायां हि अङ्गानि श्रूयन्ते" इति। तत्र उपकारकवाक्यानां च उपकार्यवाक्येन सह वाक्यैकवाक्यतया महावाक्यत्वं सिद्ध्यति। तच्च साक्षाद्विनियोजकम्।

एवम् एकादशाध्याये जैमिनीये अङ्गविषयिका चिन्ता दृश्यते। किमङ्गानि सम्भूय कार्यं कुर्वन्ति, उत भेदेनेति। तत्र जैमिनिना[66] "अङ्गानां तु शब्दभेदात् क्रतुवत् फलान्यत्वम्" इति सूत्रेण पूर्वपक्षः कृतः। चोदनाभेदात् "समिधो यजती"त्यादीनामङ्गानां पृथक् चोदितेषु क्रतुष्विव फलसम्बन्धो भवतीति तस्यार्थः। राद्धान्तस्तु[67] "अर्थभेदस्तु तत्रार्थैरैकार्थ्यादैककर्म्यम्" इति सूत्रेणाकारि। सर्वेषामपि प्रयाजादीनामनुयाजादीनाम् अर्थः प्रधानेषु उपकाररूपः एक एवेति कृत्वा न पृथक् फलसम्बन्ध इति तस्यार्थः। एकार्थत्वाच्च विकल्पे प्राप्ते "विधेस्त्वेकश्रुतित्वादपर्यायविधानान्नित्यवच्छ्रुतसंयोगादर्थेन युगपत् प्राप्तेर्यथाप्राप्तं स्वशब्दो निवीतवत् सर्वप्रयोगे प्रवृत्तिः स्यात्" इति सूत्रेण[68] परिहृतः। एकेन शब्देन "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति सर्वापेक्षया अङ्गानां प्रयोगो विधीयते। किञ्च इमान्यङ्गानि पर्यायेण न विधीयन्ते। किन्तु "समिधो यजति" इति कदाचन, "तनूनपातं यजति" इति च कदाचन विधीयन्ते। अर्थेन प्रधानस्योपकारभूतेन खलेकपोतवत् एतान्यङ्गानि युगपत् निपतन्ति। तत्र न कश्चन भेदं पश्यामः। यथा "निवीता ऋत्विजः

प्रचरन्ति" इति। अत्र ऋत्विग्विशेषाभावात् सर्वेषां च सन्निधानात् सर्वे ऋत्विजो निवीता भवन्ति। तथैव इहापि सर्वप्रयोगः स्यात्। सर्वेषामपि अङ्गानां समुच्चितानामेव प्रधानोपकारकत्वं सूत्रेणानेन प्रतिपादितमस्ति।

प्रयाजानुयाजादीनां दर्शपूर्णमासयोश्च प्रकरणादेवाङ्गाङ्गिभावः। अङ्गाङ्गिभावः, उपयार्योपकारकभावः शेषशेषिभाव इत्यनर्थान्तरम्। उक्तं च शाबरभाष्ये[69] "यद्यस्योपकरोति तत्तस्य शेषभूतम्" इति। प्रकरणं चोभयाकाङ्क्षापरम्। दर्शपूर्णमासयोः इतिकर्तव्यताकाङ्क्षा वर्तते, प्रयाजानुयाजादिषु च फलाकाङ्क्षा वर्तते इति प्रकरणं भवति। तदुक्तम् प्रकरणनिरूपणावसरे शाबरभाष्ये[70] ..... "यदितिकर्तव्यताकाङ्क्षिणः सन्निधौ पूर्णसमर्थमुपनिपतति यद्वचनं तत्तेन प्रकृतेन सहैकवाक्यतां याति। तस्मात् प्रकृते विनियुज्यते। किमिहोदाहरणं किञ्च प्रयोजनमिति। दर्शपूर्णमासौ प्रकृत्य श्रूयते "समिधो यजति", "तनूनपातं यजति", "इडो यजति", "बर्हिर्यजति", "स्वाहाकारं यजति" इति।

अङ्गलक्षणं चोक्तं जैमिनिना[71] ..... "तत्सन्निधावसंयुक्तं तदङ्गं स्यात्" इति। फलवत्सन्निधौ अफलं तदङ्गम् इति तत्र शबरस्वामी।

एवञ्च दर्शपूर्णमासानां च उपकार्योपकारकभावं पुरस्कृत्य प्रकरणता। प्रकरणं च एकवाक्यतया महावाक्यं साक्षाद्विनियोजकं परिकल्पयति। अङ्गप्रधानविध्येकवाक्यतयाऽत्र महावाक्यार्थबोधः। अयमेव प्रयोगविधिरित्यप्यभिधीयते। तदुक्तम्[72] ... अङ्गप्रधानविध्येकवाक्यताबोधक एव

प्रयोगविधिरित्यन्ये इति। अत एव प्रयोगविधिरेव महावाक्यम् इति केषाञ्चन वादः सङ्गच्छते।

प्रस्तुते प्रयाजानुयाजादीनां दर्शपूर्णमासयोश्च अङ्गाङ्गिभावेन वाक्यैकवाक्यतया "प्रयाजाद्यङ्गसहिताभ्यां स्वर्गकामो यजेत" इति महावाक्यं सिद्धम्।

शेषशेषिवाक्ययोरन्यतरस्य न स्वातन्त्र्यमस्ति। परस्परापेक्षितत्वादुपकार्योपकारकभावेन संवलितत्वाच्च। तदेतत्प्रतिपादितम् एतैः श्लोकैः कुमारिलेन[73] ....

शेषं तस्यैव तं विद्यादुपकारेण लक्षितम्।
भवत्येवं च होमादेर्भिन्नादि प्रत्यशेषता॥
न हि भिन्नोपकारार्थः स तदृध्येवोपकारकम्।
वेदे च नान्यदङ्गत्वकारणं दृश्यते क्वचित्॥
एवं सति प्रधानानामङ्गानां च परस्परम्।
अङ्गाङ्गानां च सर्वेषां सङ्कीर्येतैव शेषता॥
प्रधानान्यप्यतोऽङ्गानामङ्गानि स्युरनुग्रहात्।
स्यादन्योन्योपकाराच्च तेषामन्योन्यशेषता॥
नैकेनाऽपि प्रधानेन विनान्ये, साध्यते फलम्।
तेनैतान्युपकुर्वन्ति फलसिद्धौ परस्परम्॥
उपकारेण शेषत्वं शेषत्वाच्चोपकारिता।
स्वातन्त्र्येण प्रसिद्धं हि न ह्यन्यतरदेतयोः॥ इति।

एवं सर्वत्राऽपि एकवाक्यतामाश्रित्यैव महावाक्यकल्पना, तद्वारा चोदना च साधिता पूर्वमीमांसकैः। एकवाक्यता च बहुधा परिकल्पिता। सति सम्भवे एकवाक्यत्त्वम्, अन्यथा वाक्यभेदापत्तिः इत्युक्तपूर्वमेव। प्रकरण-पञ्चिकायां शालिकनाथमिश्रेणायं विषयः घण्टापथं समुट्टङ्कितः।[74] तथाहि ..... "अत एव यथाकथञ्चिदेकवाक्यत्वोपपत्तौ वाक्यभेदस्यान्याय्यत्त्वम्। लोके च लक्षणा, गौणी च वृत्तिर्वाक्यभेदभयादेव। अन्यथा वाक्यं भित्वा किमित्यध्याहृत्य योग्यमर्थान्तरं सर्वपदान्येव मुख्यार्थानि नाश्रीयन्ते। वेदेऽप्येक-वाक्यत्वबलादेवार्थवादेषु गुणवादाद्याश्रयणम्, सम्मार्गाधिकरणे विभक्ति-व्यत्ययवर्णनम्। औदुम्बराधिकरणपूर्वपक्षे च कथञ्चित्पशुफलकत्वाश्रयणम्। चित्राधिकरणे रूढिपरित्यागेन "पञ्चदहान्याज्यानि भवन्तीति कथञ्चिन्नाम-धेयत्वाश्रयणम्। वाजपेयाधिकरणे च वाक्यभेदभयादेव नामधेयत्वाश्रयणम्। पौर्णमास्यधिकरणे चानेकगुणविधाने वाक्यभेदापत्तेस्समुदायानुवादकत्व-सिद्धिः। प्रकरणान्तराधिकरणे च वाक्यभेददोषादेवाग्निहोत्रपदस्य गौणत्व-वर्णनम्। ग्रहाधिकरणे चैकत्वस्याविवक्षितत्वम्। अर्थमन्तर्वेदीत्यत्र देशलक्षणा-परत्वम्। क्षौमाधिकरणे च पुंद्वयविधानहानम्। हविरार्त्यधिकरणे चोभय-पदस्याविवक्षा। "वारुण्या निष्कासेन तुषैश्चावभृथयन्ती"ऽत्यत्र निरपेक्षत्व-त्यागः। पर्युदासाधिकरणे च समर्थस्य लाक्षणिकत्वमित्यादि बहुतरं दृश्यते। तत्र यदि समभिव्याह्रियमाणस्य पदस्याभिधेयं परित्यज्य, अन्येन सहान्वयो
3 लक्ष्यते तदा तदेकवाक्यता क्षीयेत। तदर्थमेवेदमुक्तं न्यायसम्पादितव्यक्तेरिति। एकवाक्यत्वं हि न्यायः। तदनुसारेण योऽर्थः सोऽत्र वाक्यस्याश्रयणीयः।

वृद्धव्यवहारव्युत्पत्तिनियन्त्रितायां शब्दार्थावगतौ ये न्यायाः वृद्धव्यवहारे वाक्यार्थावगतिहेतुतया विहितास्तानपरिजहता वाक्यार्था बोद्धव्या इति सर्वासामेवानुपपत्तीनामनवकाशः" इति।

तस्मात् वेदे यथा विशेषणविशेष्यभावापन्नवाक्यानां परस्परसमन्वयेन महावाक्यार्थो जायते तथा तथा न्यायाः परिवर्तनीयाः। यतश्चोदनायाः सिद्धिरन्यथा न भवति।

सिद्धेषु महावाक्येषु तदर्थः कथं प्रभवतीति विषये भाट्टानां प्राभाकराणां च मतभेदोऽस्ति। तत्र तावत् भाट्टानां मतं प्रस्तूयते। अभिहितान्वयवादो भाट्ट इति लोके प्रसिद्धः।

श्लोकवार्तिके कुमारिलभट्टपादेन यद्वाक्यार्थविषयकं लक्षणमुक्तं तदेव महावाक्यार्थविषयेऽपि सङ्गच्छते। यतो हि मीमांसकैः महावाक्यस्वरूपविषये विचारणा कृता, न तु पृथक् महावाक्यार्थविषये। अतएव व्याख्यातारः अनुवादकाराश्च कुमारिलोक्तवाक्यार्थविचाराणां वाक्यार्थमहावाक्यार्थसामान्येन स्वीकृतवन्तः।[75]

कुमारिलेन च वाक्यार्थविषये अभिहितान्वयवादः स्वीकृतः। अभिहितानां पदार्थानां संसर्गेण वाक्यार्थः जायते इत्येतन्मतानुसारिणां वादः। प्रथमं पदेभ्यः शक्त्या प्रत्येकपदार्थबोधे जाते, तदनन्तरं परस्पराकाङ्क्षावतां पदार्थानां सम्मेळनेन संसर्गरूपः वाक्यार्थबोधो जायते इत्येष अभिहितान्वयवादस्य सारांशः। तथाहि - कुमारिलेनोक्तं श्लोकवार्तिके वाक्याधिकरणे[76]...

भावनैव हि वाक्यार्थः सर्वत्राख्यातवत्तया।
अनेकगुणजात्यादिकारकार्थानुरञ्जिता॥
अन्वयव्यतिरेकाभ्यां प्रत्ययार्थस्तु सेष्यते।
कैश्चिदन्यैस्तु धात्वर्थः सामीप्येनोपकारतः॥
अपरैस्समुदायार्थः तव एव हि गम्यते।
पाकादौ यन्न दृष्टास्ति भवत्यादौ तथैव च॥ इति।

इदमत्र तात्पर्यम् - सर्वत्र वाक्येषु महावाक्येषु च अनेककारककार्थसहिता भावनैव वाक्यमहावाक्यप्रयुक्तशाब्दबोधरूपः वाक्यार्थः, सर्वत्राऽपि भावनायाः आख्यातसामान्यप्रतिपाद्यत्वात्।

अत्र पक्षत्रयं वर्तते। प्रकृतेरेव भावनाया अनुभावकत्वम्, प्रत्ययस्य तु उपलक्षणत्वं सामीप्येन इति प्रथमः पक्षः।

प्रत्ययमात्रजन्यशाब्दधीविषयत्वरूपं प्रत्ययार्थत्त्वमित्यन्यः पक्षः। तथा च भावनादिकं प्रत्ययमात्रवाच्यम्। तच्छब्दानुकूलशक्तेरेव तद्वाचकत्वरूपत्वात्। (अत्र प्रत्ययमात्रेणार्थबोधे जायमाने "न केवला प्रकृतिः प्रयोक्तव्या, नापि प्रत्ययः" इति नियमात् प्रकृतेरपि प्रयोगः सम्भवति।)

प्रकृतिविशिष्टप्रत्ययार्थस्यैव भावनाया अनुभावकत्वमित्यपरः पक्षः। अत्र प्रत्ययस्यानुभावकत्वम्, प्रकृतेस्तु सामीप्येनोपलक्षणत्वम्।

तथा च प्रकृत्यर्थान्वितकर्मत्वादिसंसर्गस्य क्रियायां शाब्दधीरिति आद्यपक्षे, प्रत्ययपूर्ववृत्तित्वविशिष्टप्रकृतेः कर्मत्वादिविशिष्टघटत्वादावनु-

भावकत्वम् इति द्वितीयपक्षे प्रकृत्युत्तरप्रत्ययस्य घटत्त्वादिविशिष्टकर्मत्वादौ इति तृतीयपक्षे च समन्वयः इति।

तत्र पक्षत्रयेऽपि कर्मत्वादिकारकस्य विशेष्यत्वमेव युक्तम्। "प्रकृति-प्रत्ययौ सहार्थः ब्रूतः, तयोस्तु प्रत्ययार्थः प्रधानम्" इति नैरुक्तानुशासनात्।[77] अत एव भावार्थाधिकरणे प्रत्ययार्थस्यैव प्राधान्यमुक्तम्।

तथा च अभिहितान्वयवादे भाट्टमते पदैः पदार्थाः अभिधीयन्ते। तेभ्यः संसर्गरूपः अपूर्वः वाक्यार्थः लक्षणया बोध्यते। तथा च प्रथमं योग्यता-सत्यादिसहितेभ्यः पदेभ्यः पदार्थानुभवः, ततश्च तेभ्यः पदार्थेभ्यः करण-भूतेभ्यः पदार्थसंसर्गरूपशाब्दधीर्जायते।

अयमत्र निष्कर्षः ... अभिहितान्वयवादे संसर्गात् पृथक् लक्षणायाः अङ्गीकारात् न संसर्गस्य पदोपस्थाप्यत्वम्।

अतएव "तथा च अभिहितान्वयवादे महावाक्यार्थधीकरणस्य शाब्दबोधस्यावश्यकताया स्मृतिसमोऽपि न कल्प्यते। यद्यपि स्मृतिसमत्त्वं ज्ञातविषयकत्वम्। प्रमाणजन्यं ज्ञानं च अज्ञातविषयकत्वमेव। अनुवाद-वाक्यादिस्थले वाक्यार्थज्ञानं स्मृतिरेव। प्रमाणादप्रमानुत्पत्तेः। तथाऽपि अगतिकगतिकत्वात् महावाक्यादिस्थले पदजन्यो बोधः स्मृतिसमः कल्प्यते। स्मृतिप्रमा विलक्षणमपि ज्ञानं प्रमाणजन्यं स्वीक्रियते, अन्यथानुपपत्तेः। अत एव घटोऽस्तीत्यादिवाक्यजन्ये अस्तित्वं घटत्वीयमिति शाब्दबोधे घटत्वनिर्विकल्पकशाब्दबोधः स्मृतिसम एव कारणम्। निर्धर्मितावच्छेदकक-

शाब्दबोधसम्भवेन एकत्वादिप्रकारकघटत्वविशेष्यकशाब्दबोधस्य तत्राऽसम्भवात्" इति तन्मतमनूदितम्।[78]

अभिहितान्वयवादिनां मते पदमेव स्वीकृत्य महावाक्यार्थः निरूप्यते। अत्र श्रोतुः सौलभ्याय अवान्तरवाक्यानां पदस्थानीयत्वं प्रकल्प्य वाक्यार्थः समुचित इति प्रतिभाति।

**अन्विताभिधानवादः**

प्रभाकरेण महावाक्यार्थविषये स्वोपज्ञमन्विताभिधानवादमधिकृत्य यदुक्तं तत्साक्षात् न ज्ञायते। तदनुयायिभिस्तु तन्मतमनूदितम्। अन्विताभिधानवादिनः क्रियाकारकसम्बन्धादिरूपस्य महावाक्यार्थस्य ज्ञानं पदजन्यं वदन्ति। तथा च प्रकरणपचिकायामुक्तम्[79] .... भाष्यकारवचनं च "पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायकः" इति निर्विषयम्। अशक्यं च महावाक्यस्य सकृत् स्मरणम्। तस्मात् पदानामेव वाचकशक्तिराश्रयणीया इति।

यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते।
तेन तेनान्वितस्स्वार्थः पदैरेवावगम्यते॥ इति च।

तथा च आकाङ्क्षायोग्यतासन्निधिसहकृतपदैरेव वाक्यार्थस्य क्रियाकारकसम्बन्धादिरूपस्य बोधोत्पत्तेः नावान्तरवाक्यार्थस्य प्रकृतिप्रत्ययार्थसम्बद्धादिरूपस्य शाब्दधीविषयत्वे मानमस्ति। विशेष्ये विशेषणम्, तत्र च विशेषणान्तरमितिरीत्या महावाक्यार्थधीसम्भवात् इत्यन्विताभिधानवादः।

यद्यपि वाक्ये अन्विताभिधानवादिभिः पदानामर्थं स्वीकृत्यैव महावाक्यार्थः प्रतिपादितः। तथाऽपि विवक्षितार्थमनुसृत्यैव महावाक्य-

प्रयोगस्य दृश्यमानत्वात्, दीर्घदीर्घे महावाक्ये पदानामन्वयः क्लेशतरो भवतीत्यवान्तरवाक्यानामेव परम्परान्वयेन महावाक्यार्थज्ञानं प्रभवतीति साधु। इदं च व्यावहारिकमहावाक्यविचारणावसरे तृतीयपरिच्छेदे स्फुटी भविष्यति।

महावाक्यावान्तरवाक्ययोरर्थबोधकत्वविषये मीमांसकानां वैयाकरणानां च मतभेदोऽस्ति। तथाहि वैयाकरणास्तावत् अखण्डवाक्यार्थमिच्छन्ति। तेषां मते वाक्ये पदानामिव पदे वर्णानामिव च महावाक्ये नावान्तरवाक्यानां सत्ता। केवलं व्यवहारार्थं महावाक्ये अवान्तरवाक्यार्थकल्पना क्रियते।

मीमांसकस्तु अवान्तरवाक्यस्य सत्तां विशिष्य प्रतिपादयन्ति। तथाहि .... उक्तं कुमारिलेन श्लोकवार्तिके वाक्याधिकरणे।[80]

तदेव सकलं वाक्यं न्यूनमन्यदपेक्ष्य च।
तद्विरुद्धं न चाभिन्ने न्यूनसाकल्यकल्पना।।
पृथक्प्रसिद्धसद्भावं त्रिपदं च चतुष्पदे।
नास्तीति यदि कल्प्येत वृक्षो न स्यात्तदा वने।।
पृथक्प्रसिद्धयमिथ्यात्वात् स्याद्वाक्यान्तरता यदि।
वाक्याच्छब्दान्तरत्वं स्यात्तथैत पदवर्णयोः।।
तस्माद्यथा महावाक्ये लघूनामनिराक्रिया।
तथैव पदवर्णानां नाऽऽसत्वं वाक्यबुद्धिषु।।
केवलस्याप्रयोगश्चेत् महदर्थे लघोरपि।
अल्पार्थे तत्प्रयुक्तं चेत्तु स्वार्थे तद्वत्पदानि नः।।

यद्यपि व्यवहाराङ्गं न पूर्णं पदवर्णयोः।
तथाप्यस्त्येव सद्भावस्तन्मात्रे प्रयुयुक्षिते।। इति।

मीमांसकमते ... देवदत्तः काष्ठैः स्थाल्यां तण्डुलान् पचति इति पञ्चपदे वाक्ये, देवदत्तः पचति इत्यादिरूपेण द्विपदं, त्रिपदं, चतुष्पदं च वाक्यं भवति। वैयाकरणमतेत्वखण्डमेव वाक्यम्।

यद्यपि व्यवहारे साध्यसाधनेतिकर्तव्यतारूपांशत्रयविशिष्टं भावना-ज्ञानं पूर्णं वर्णपदयोः न लभ्यते। तथाऽपि प्रयुयुक्षिते वर्णस्य, पदस्याऽपि सत्तास्त्येव।

इदं तात्पर्यं मीमांसकानाम् .... "समिधो यजति" "तनूनपातं यजति" इत्याद्यवान्तरवाक्यानामखण्डवाक्यवादिनां मते नार्थबोधकत्वम्। तथा च वेदोक्ताङ्गानामनुष्ठानं नैव स्यात्। अतएव "सति महावाक्ये नावान्तरवाक्यं प्रमाणम्, अन्यथा तु अवान्तरवाक्यमपि प्रमाणमेव" इति षष्ठाध्याये शबर-स्वामी।[81] यदा केवलमवान्तरवाक्यं प्रयुक्तं "पटो भवति" इति तत्प्रमाणम्। यदा च "रक्तः" इति विशेषणेनाकाङ्क्षाविशिष्टं भवति तदवान्तरवाक्यं, तदा न प्रमाणम्, साकाङ्क्षत्वात्। अवान्तरवाक्यस्य तु उभयत्राऽपि सत्ताऽस्त्येव। प्रयोजनवत्त्वात्। तदुक्तं श्लोकवार्तिके एव वाक्याधिकरणे [82] ...

प्रकृतिप्रत्ययौ यद्वदपेक्षेते परस्परम्।
पदं पदान्तरं यद्वद्वाक्यं वाक्यान्तरं तथा।।
करणैः साध्यते किञ्चिन्नोपायरहितैः फलम्।
प्रयाजादिविधानं च न च स्यान्निष्प्रयोजनम्।। इति।

तथा च पदे प्रकृतिप्रत्यययोः, वाक्ये पदानां, महावाक्ये चावान्तर-वाक्यानां परस्परापेक्षया सत्ता प्रतिपादिता मीमांसकैः।

वैयाकरणैस्तु सर्वथा एतद्विपरीतमुक्तम्।[83] तथाहि ....

अपोद्धारपदार्था ये ये चार्थाः स्थितलक्षणाः।
पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च॥
वाक्यात्पदानामत्यन्तं प्रविभागो न कश्चन।
यथा पदसरूपाणां वाक्यानां सम्भवः पृथक्।
तथा वाक्यान्तराभावे स्यादेषां पृथगर्थता॥ इति।

लोकव्यवहारे च वाक्यं महावाक्यं वा प्रयुज्यते सम्पूर्णार्थाव-बोधकम्प्रयोजनसहितमिति कृत्वा वैयाकरणैः वर्णपदावान्तरवाक्यानां सत्ता तिरस्कृता। अत्र कुमारिलसवादोऽपि विद्यते[84] .....

न हि प्रयोजनापेतं वावयमुच्चार्यते क्वचित्।
प्रयोजनक्षमं नापि पदमाख्यातवर्जितम्॥ इति।

तस्मात् सुबोधाय प्रकृतिप्रत्ययवर्णपदावान्तरवाक्यादिविभागः कल्पितः। परमार्थतस्तु वाक्यमहावाक्य एव सम्पूर्णार्थावबोधक इति त एव प्रमाणम्।

"शब्दार्थयोः नित्यः सम्बन्धः" इत्यस्मिन्नंशे तु उभयोरपि न वैमत्यम्। उक्तं हि महाभाष्ये[85] .... "सिद्धे शब्दार्थसम्बन्धे" इति। जैमिनिनाऽपि "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः .... बादरायणस्यानपेक्षत्वात्" इति।

जैमिनीये वाक्यरूपाणां सूत्राणां परस्परापेक्षावतां वाक्यैकवाक्यतया महावाक्यं परिकल्प्य, तद्वारा तत्तत्सूत्रविहितकार्यसाधकत्वं बोध्यम्।

एवं चास्मिन् परिच्छेदे बहुविधसम्बन्धनिमित्तामेकवाक्यतां समाश्रित्य महावाक्यविचारः प्रवर्तितः। इदमत्र सङ्ग्रहेणोच्यते। प्रयोगविधौ प्रधान-वाक्याङ्गवाक्यानामवान्तरवाक्यरूपाणां परस्परमङ्गाङ्गिभावेन वाक्यैकवाक्य-तया महावाक्यार्थबोधः। विध्यर्थवादवाक्यानां च शेषशेषिभावपरिकल्पनेन वाक्यैकवाक्यतया महावाक्यत्वसिद्धिः। तथा निन्दापराणामर्थवादानामपि निषेधविधायकवाक्यशेषत्वपरिकल्पनेन शेषशेषिभावादेकवाक्यता। सन्दिग्धा-नामर्थवादानां विषये तु गौणं वादं समाश्रित्य यथाकथञ्चित् तेषामपि विधा-यकवाक्यैः उपकार्योपकारकभावपरिकल्पनेन एकवाक्यतया महावाक्य-धीजननम्। अन्यादृशानां च वाक्यानाम् उपक्रमोपसंहारावाश्रित्यविधिवाक्यै-रङ्गाङ्गिभावः। यावतां वाक्यानां फलकल्पनेऽर्थवत्त्वं तावतां सर्वेषामपि विधि-वाक्येनैकवाक्यतया महावाक्यत्वं साधनीयम्। केषुचन प्रदेशेषु विशेषण-विशेष्यभावस्य गम्यमानत्वे गुणगुणिवाक्यानामवान्तरवाक्यभूतानां परस्परं वाक्यैकवाक्यतया महावाक्यता सिद्ध्यति। फलश्रुतिपरकृतिपुराकल्पादीनां चार्थवादत्वकल्पनेन तद्बोधकवाक्यानामपि विधिवाक्यशेषत्वं, तद्वारा शेषशेषिभावकृता वाक्यैकवाक्यता सिद्ध्यति। तेन च महावाक्यं प्रभवति। अन्ततश्च एकार्थविधायकानां वाक्यानामर्थैकत्वादेकवाक्यत्वं तेन च महावाक्यार्थबोधः।

सामान्यतः वाक्यसमुदायस्यैव महावाक्यसंज्ञा। प्राशस्त्यनिन्दादिबोधकपदैः विधिवाक्यस्य पदैकवाक्यतया सिद्धानां वाक्यानां महावाक्यसंज्ञा औपचारिकी। महावाक्ये वाक्ये इव योग्यताकाङ्क्षासत्तीनामावश्यकता वर्तते। सति महावाक्ये नावान्तरवाक्यस्य प्रामाण्यम्। (आवान्तरवाक्यानां च साकाङ्क्षाणां न प्रामाण्यम्) राद्धान्ते च वाक्यसमूहात्मकेन महावाक्येनैव सम्पूर्णार्थबोधः। नत्ववान्तरवाक्येन इति निश्चप्रचं वक्तुं शक्नुमः।



# द्वितीयपरिच्छेदः
## (उत्तरमीमांसा)

इदानीं वेदान्तशास्त्रानुसारेण प्रकृतैव सरणिर्विचार्यते। वाक्यार्थ-विचारस्य यत् स्थानं शास्त्रान्तरेषु दृश्यते तदेव स्थानं वेदान्तशास्त्रे महा-वाक्यार्थविचारस्य दृश्यते। तत्र उपनिषत्सु अभ्यस्तानि "तत्त्वमसी"त्यादि-वाक्यानि महावाक्यानीति व्यवह्रियन्ते। तेषां च तद्वाक्यबोध्यमर्थं पुरस्कृत्यैव महावाक्यसंज्ञा प्रवृत्ता। एतदनुसारिण्येव "रामादिवद्वर्तितव्यं न तु रावणादिवत्" इत्यादि लौकिकवाक्यानां महावाक्यसंज्ञा। वेदान्तदर्शने च शाब्दविचारणा प्रायेण पूर्वमीमांसानुसारिण्येव वर्तते।

तत्र बादरायणप्रणीतानि चतुरध्यायात्मकानि सूत्राणि ब्रह्मसूत्राणी-त्यपि कथ्यन्ते। तान्येवोत्तरमीमांसायाः परमं मूलम्। प्रस्थानत्रये एकतमायाः उत्तरमीमांसाया अनेकैः भाष्यमभाषि। तत्र शङ्करभगवत्पादकृतमद्वैतपरं, श्रीमद्रामानुजाचार्यकृतं विशिष्टाद्वैतपरं, श्रीवल्लभाचार्यकृतं विशिष्टविशिष्टा-द्वैतपरं, श्रीमध्वाचार्यकृतं द्वैतपरं च भाष्यं लोके प्रथामगात्।

तत्र परमसिद्धान्तविषये मतभेदेषु सत्स्वपि "सर्वेषामपि वेदान्तवाक्यानां ब्रह्मणि समन्वयः" इत्यस्मिन्विषये न कस्यापि विप्रतिपत्तिं पश्यामः।

ब्रह्मसूत्राणां च परमप्रयोजनं वेदान्तवाक्यानां परस्परानुसन्धानमेव। उक्तं च शङ्कराचार्यैः जन्मादिसूत्रे "वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणाम्। वेदान्तवाक्यानि सूत्रैरुदाहृत्य विचार्यन्ते" इति।

वेदान्तवाक्यानां परस्परसमन्वयादेव ब्रह्म प्रतिपाद्यते। तदुक्तं "तत्तु समन्वयात्" इति सूत्रेण।[1] वेदान्ते सर्वत्राऽपि तच्छब्देन ब्रह्मैव गृह्यते। समन्वयो नाम सम्यगन्वयः। सम्यक्त्वं च तात्पर्यवत्त्वम्। तेन यथा सर्वेषां वाक्यानां ब्रह्मणि तात्पर्यं स्यात्तथा समन्वयः कर्तव्य इति भावः। समन्वयश्च उपक्रमोपसंहारादिभिः सिद्ध्यतीति भाष्येषु प्रतिपादितमेव। अत एव तात्पर्यनिर्णायकानि लिङ्गानि बृहत्संहितायामेवं प्रतिपादितानि ...

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥

षड्भिरेतैर्लिङ्गैस्तात्पर्यं निर्णीयते। तत्र त्रिविधं तात्पर्यलिङ्गं प्रामाण्यशरीरघटकमर्थनिष्ठम्, अपूर्वता, फलम्, उपपत्तिः इति। एतेषामेव क्रमेण अज्ञातत्वं, प्रयोजनवत्त्वम्, अबाधितत्वमिति नामान्तरम्। त्रिविधं तु शब्दनिष्ठम्। अतिप्रसङ्गवारकम् उपक्रमोपसंहारयोरैकरूप्यम्, अभ्यासः, अर्थवादश्चेति। तत्र शब्दनिष्ठलिङ्गत्रये न विवादः सर्वासामेवोपनिषदामेवं प्रवृत्तत्वात्।

उपक्रमेत्यादिवृद्धोक्तौ उपक्रमोपसंहारपदाभ्यां विचार्यवाक्यस्याद्यन्तभागयोः एकार्थपर्यवसानम् अभ्यासः अनन्यपरं पुनः पुनः श्रवणम्। अर्थवादः स्तुतिनिन्दान्यतरवाक्यम्। एतत्त्रयं शब्दघटितत्वाच्छब्दनिष्ठम्। तत्र उपक्रमोपसंहारयोरैकरूप्यस्य एकार्थतात्पर्यनिर्णायकत्वेन लिङ्गत्वम्। तात्पर्यविषयत्वेन सन्दिग्धानां बहूनां मध्ये यस्मिन्नर्थे आद्यन्तभागयोः पर्यवसानं, तस्मिन्नेव तात्पर्यस्य निर्णयात्। अन्यथा तस्य वैयर्थ्यात्। क्वचिच्च अनुवादत्वादिशङ्कापसारकतयाऽपि तस्य लिङ्गत्वम्। यदि हि तस्मिन्नर्थे वाक्यमनुवादः

स्यात् तदोक्तपर्यवसानं व्यर्थस्स्यादिति युक्तेः। द्वितीयं त्वभ्यासः। समिदादि-वाक्येषु यद्यपि विलक्षणनानाकर्मविधाने तात्पर्यग्राहकत्वम्, विहित-विधानायोगात्। तथाऽपि सिद्धार्थविषयकं सदेकार्थतात्पर्यज्ञापकम्। अन्यथा पुनश्श्रवणवैयर्थ्यदोषता। तस्मात् आदरज्ञापनद्वारा तस्य तात्पर्यग्राहकत्वम्। अभ्यस्तस्य पूर्वकाण्डे कर्मभेदः उत्तरकाण्डे आदरज्ञापकत्वम् इति नोभयत्रापि पौनरुक्त्यम्। तदुक्तं भामत्याम्[2] ... "अभ्यासे हि भूयस्त्वमर्थस्य भवति। यथा अहो दर्शनीया अहो दर्शनीयेति" इति। आदरश्च यद्यपि प्राशस्त्यरूपः। स च अभ्यस्यमानस्यार्थस्य विधेयत्वानुमानद्वारा तथैव तज्ज्ञापकः। तथाऽपि अर्थवादबोध्यं प्राशस्त्यं बलवदनिष्टाजनकत्वरूपम्। अभ्यासबोध्यं तु अर्थान्तरादुत्कृष्टत्वरूपमिति नाभ्यासार्थवादयोरर्थैक्यम्।

अथ अर्थनिष्ठानि लिङ्गानि निरूप्यन्ते। तथाहि ... प्रकृतवाक्यार्थधी-विषये उक्तधीपूर्वमज्ञातत्वमनधिगतत्वम्। तदेवापूर्वता। उक्तधियः प्रयोजनवत्त्वं फलम्। उपपत्तिः उक्तधीविषयस्याबाधितत्त्वम्। एतस्य तु त्रयस्य अबाधितानधिगतप्रयोजनवदर्थबोधकत्वरुपप्रामाण्यघटकतया तात्पर्यं प्रति व्यापकतया लिङ्गत्वम्। यथा यज्ञोपवीतादिकं ब्राह्मण्यं प्रति।

अत्रैवं सति च वेदान्ते प्रायेण उपक्रमोपसंहाराभ्यामेव तात्पर्यनिर्णयः। अत एवेदं शाङ्करं वचनम्[3] .... "उपक्रमोपसंहाराभ्यां हि वाक्यैकत्वमवगम्यते" इति। उपक्रमोपसंहारौ प्राधान्येनैकवाक्यतानिर्णायकावित्यर्थः। एकवाक्यत्वे च महावाक्यं सम्भवति। तच्च ब्रह्मप्रतिपादकं भवति। अत एव च[4] .... "तेनैकवाक्यतामापन्नान्यर्थसद्भावो प्रमाणम्" इति रामानुजा अपि। एकवाक्यतापन्नानि उपनिषद्वाक्यानि ब्रह्मप्रतिपादनपराणीति तात्पर्यम्।

अथ उदाहरणमुखेन प्रकृतं निरूप्यते .... छान्दोग्ये एकमेवाद्वितीय-मित्युपक्रमः। ऐतदात्म्यमिदं सर्वमित्युपसंहारः। तत्त्वमसीत्यादेर्नवधा आवृत्तिरभ्यासः। अद्वितीयात्मनः प्रमाणान्तरागम्यत्वस्य तत्र प्रदर्शनमपूर्वत्वम्। "तं त्वौपनिषदं पुरुषं पृच्छामि" इत्यादि श्रुत्यन्तरं तत्रोपोद्बलकम्। "येनाश्रुतं श्रुतं भवति" इत्येवमेकविज्ञानमुच्यमानं फलम्। "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" इत्यादिवाक्यैः ब्रह्मणः सकाशात् सृष्टिरुक्ता। "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इति स्थितिर्नियमनं चोक्तम्। तेजः परस्यां देवतायामिति प्रलयः। "इमास्तिस्रो देवता अनेन जीवेनात्मनानु-प्रविश्य नामरूपे व्याकरवाणि" इति प्रवेशः। एवं श्रुतिप्रतिपादितैः सृष्ट्यादिभिः ब्रह्मप्रशंसनमर्थवादः। "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्येवमद्वितीयवस्तुसाधने प्रोच्यमाना युक्तिरुपपत्तिः।

बृहदारण्यके च "आत्मन्येवोपासीतात्र ह्येते सर्व एक भवन्ति" इत्युपक्रमः। "पूर्णमद" इत्युपसंहारः। "स एष नेति नेत्यात्मा इत्यभ्यासः। "तं त्वौपनिषदं पुरुषं पृच्छामि" इत्यपूर्वत्वं सूचितम्। "अभयं वै जनक प्राप्तोऽसि" "ब्रह्मैव सन् ब्रह्मण्येति" इत्यादि फलम्। "तद्यो यो देवानाम्" इत्याद्यर्थवादः। "स यथा दुन्दुभेः" इत्याद्युपपत्तिः।

तैत्तिरीयके च "ब्रह्मविदाप्नोति परम्" इत्युपक्रमः। "आनन्दो ब्रह्मेति व्यजानात्" इत्युपसंहारः। "स यश्चायम्" इत्यभ्यासः। "यो वेद निहितं गुहायाम्" इत्यपूर्वतासूचनम्। "अभयं प्रतिष्ठां विन्दते", "अथ सोऽभयं गतो भवति"

इति फलश्रुतिः। "सोऽकामयत" इत्याद्यर्थवादः। "असन्नेव स भवति असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरिति, को ह्येवान्यात्कः प्रण्याद्य एष आकाश आनन्दो न स्यादि"त्युपपत्तिः।

मुण्डकोपनिषदि च "अथ परा यथा तदक्षरमधिगम्यते इत्युपक्रमः। "ब्रह्मैवेदममृतं पुरस्तात्" इत्युपसंहारः। "येनाक्षरं पुरुषं वेद सत्यं", "तदेतदक्षरं ब्रह्म", "तमेवैकं जानथ आत्मानम्" इत्याद्यभ्यासः। "न चक्षुषा गृह्यते नापि वाचा" इत्यारभ्य "वेदान्तविज्ञानसुनिश्चितार्थाः" इत्यन्तेनापूर्वतासूचनम्। "निरञ्जनः परमं साम्यमुपैति", "ब्रह्म वेद ब्रह्मैव भवति" इति फलश्रुतिः। यथा "सुदीप्तात्पावकाद्विस्फुलिङ्गाः" इत्याद्यर्थवादः। "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञारूपा उपपत्तिः। एवमेवैतरेयादिष्वपि।

एवं च उपक्रमोपसंहारादिलिङ्गषट्केन तात्पर्ये निरूपिते सर्वेषामपि वेदान्तवात्यानामेकवाक्यता, ब्रह्मरूपार्थैकबोधकत्वात्। तेन वियदधिकरणोक्तम् "एकवाक्यत्वात् सर्वश्रुतीनाम्" इति शाङ्करं वचनं सङ्गच्छते।

सर्वदर्शनसङ्ग्रहे च सायणः प्राह[5]... "तस्माद्वेदान्तानामप्यात्मा ज्ञातव्य इति समाम्नातेन विधिनैकवाक्यतामाश्रित्य कार्यपरतैवाश्रयणीयेति सिद्धम्" इति, "तथा च सर्वेषां वेदान्तवाक्यानामुपक्रमोपसंहारादिषड्विधतात्पर्योपेतत्वान्नित्यशुद्धबुद्धमुक्तस्वभावब्रह्मात्परत्वमास्थेयम्" इति च।

पूर्वकाण्डे "स आत्मानो वपामुदखिदत्" इत्येवमादीनां कर्मश्रुतिगतानामाख्यानानां सन्निहितविधिस्तुत्यर्थतोक्ता। तेन च स्तुतिपराणामाख्यान-

वाक्यानां विधिवाक्यशेषत्वम्। शेषशेषिणोरेकवाक्यतया महावाक्यार्थत्त्वबोधः। अयमेव पन्था अनुसृतः पारिप्लवाधिकरणे उत्तरकाण्डे। तथाहि .... "अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः मैत्रेयी च कात्यायनी च"[6], "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम"[7], "जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस"[8] इत्येवमादिषु वेदान्तपठितेष्वाख्यातेषु संशयः .... किमिमानि पारिप्लवार्थानि ? उत सन्निहितविद्याप्रतिपत्त्यर्थानि इति। सन्निहितविद्याप्रतिपत्त्यर्थानीति सिद्धान्तः। तथा च बादरायणः[9] "यथा चैकवाक्यतोपबन्धात्" इति। एतेषामाख्यानानां सन्निहितविद्याभिरेकवाक्यता दृश्यते, प्ररोचनोपयोगात् प्रतिपत्तिसौकर्याच्च। तथा च आहचेत्याद्याख्यानस्य "आत्मा वा अरे द्रष्टव्यः"[10] इत्यादिविद्यया एकवाक्यता। "एवं प्रतर्दनो ह वै" इत्याद्याख्यानस्य "प्राणोऽस्मि प्रज्ञात्मा" इत्याद्यया विद्यया। "जानुश्रुतिरि" त्याद्यस्य वायुर्वाव संसर्गः[11] इत्याद्यया। एवं च एकवाक्यतयैवाख्यानानां विद्याप्रतिपादनोपयोगिता।

श्रीभाष्ये च रामानुजैः कर्मब्रह्ममीमांसयोरैकशास्त्र्यं प्रतिपादितम्।[12] तच्च प्रतिपादनं अर्थैकत्वमनुसृत्य एकवाक्यतां पुरस्कृत्यैव च कृतम्। तेन मीमांसयोः एकप्रबन्धत्वेन महावाक्यत्वं सिद्ध्यति। तत्र संहितमेतच्छारीरिकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः[13] इति बोधायनवृत्तिवाक्यं प्रमाणयन्ति। वेदस्य पुरुषार्थपरत्वाद्ब्रह्मपरत्वाद्वा पूर्वोत्तरमीमांसयोः अङ्गाङ्गि-भावः तत्रैव व्याख्यातृभिः प्रत्यपादि। "वेदस्य सर्वस्यापि पुरुषार्थपरत्वात्, ब्रह्मपरत्वाद्वा वेदस्यैकप्रबन्ध्यमुपपद्यते, तथा च वेदार्थविचारस्यानुगत-

त्वान्मीमांसयोः ऐकप्रबन्ध्यम्" इत्यपि तेषां वादः। "सर्वे वेदा यत्पदमामनन्ति", "वैदेश्च सर्वैरहमेव वेद्यः" इति श्रुतिस्मृतिवचने च प्रमाणयन्त्यस्मिन्विषये।[14] तेनार्थैकत्वादेकवाक्यतया ऐकप्रबन्ध्यं मीमांसयोः प्रतिपादितं भवति।

वल्लभाचार्यास्त्वणुभाष्ये पूर्वोत्तरकाण्डयोः परस्परमुपकार्योपकारक-भावं प्रतिपादयन्ति। यज्ञादिकर्मानुष्ठानार्थमपि ब्रह्मज्ञानस्यावश्यकतां च साधयन्ति। तेन मीमांसयोरैकशास्त्र्यं प्रतिपादितं भवति। तथाहि ..... जिज्ञासाधिकरणे तैरुक्तम्[15] .... "किञ्च औपनिषदज्ञानस्यापि कर्मोपयोगित्वं यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवति" इति। अत एव ब्रह्मविदामेव जनकादीनां कर्मणि सर्वदेवसान्निध्यम्।

ब्रह्मण्यध्याय कर्माणि सङ्गं त्यक्त्वा करोति यः।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा॥

अतो ब्रह्मविदामेव कृतं कर्म शुभफलं भवति। अतो धर्मविचारका-णामपि ब्रह्म जिज्ञास्यमेव इति। एतेन यज्ञादिकर्मानुष्ठानात्पूर्वं ब्रह्मज्ञानस्याव-श्यकता प्रतिपादिता। तेनोपकार्योपकारकभावस्स्पष्टीभवति मीमांसयोः। जन्माद्यधिकरणे च तैरभाणि[16]... काण्डद्वयस्यान्योन्योपकारित्वाय साधारण-ग्रहणम्। यदेव विद्यया करोति इत्यादिना पूर्वशेषत्वं सर्वस्य। तमेतं वेदानुवच-नेन ब्रह्मणा विविदिषन्तीत्यादिना सर्वस्योत्तरशेषत्वम्। कर्मब्रह्मणोः क्रिया-
4
ज्ञानयोर्धर्मिपरत्वेनैक्यात्तु कर्तृवाक्येषु सर्वत्र न विरोधः इति। पूर्वोत्तरमीमांसयोः परस्परोपयोगित्वं समन्वयाधिकरणेऽपि आनन्दतीर्थैः प्रत्यपादि। तेन ऐकशास्त्र्यं मीमांसयोर्भवत्येव।

द्वैतवादिनो मध्वाचार्यास्तु समन्वयसूत्रे[17] "अन्वय उपपत्त्यादिलिङ्गम्" इति व्याकुर्वन्ति। तेन उपक्रमोपसंहारादिलिङ्गषट्कमनुसृत्यैव शास्त्रसमन्वयः कर्तव्यः इति, तदनुसारेण मीमांसयोर्नैकवाक्यतेति च वक्तुं पारयामः। लिङ्गषट्के कतमेनाऽपि मीमांसयोरेकविषयप्रतिपादकत्वस्य वक्तुमशक्यत्वात्।

शङ्करभगवत्पादास्तु मीमांसयोरैकशास्त्र्यं सुतरां नोररीकुर्वन्ति। स्ववादोपष्टम्भकत्वेन च श्रुतिस्मृती प्रमाणयन्ति। तथा चोक्तं तैस्समन्वयसूत्रे .... "अत्राभिधीयते - न, कर्मब्रह्मविद्याफलयोर्वैलक्षण्यात्। .... अतस्तद्ब्रह्म यस्येयं जिज्ञासा प्रस्तुता, तद्यदि कर्तव्यशेषत्वेनोपदिश्येत, तेन च कर्तव्येन साध्यश्चेन्मोक्षोऽभ्युपगम्येत, अनित्य एव स्यात्। ..... नित्यश्च मोक्षः सर्वैर्मोक्षवादिभिरभ्युपगम्यते, अतो न कर्तव्यशेषत्वेन ब्रह्मोपदेशो युक्तः। अपि च "ब्रह्म वेद ब्रह्मैव भवति", "क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे", "आनन्दं ब्रह्मणो विद्वान्", "न बिभेति कुतश्चन", "अभयं वै जनक प्राप्तोऽसि", "तदात्मानमेव वेदाहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्", "तत्र को मोहः कः शोकः एकत्वमनुपश्यतः" इत्येवमाद्याः श्रुतयो ब्रह्मविद्यानन्तरं मोक्षं दर्शयन्त्यो मध्ये कार्यान्तरं वारयन्ति" इति।

तथा च प्रतिपाद्यभेदात्तु मीमांसयोरैक्यं न कथमपि सङ्गच्छते इति शाङ्करं मतम् इति स्फुटीभवति। तेन न पूर्वोत्तरमीमांसयोरङ्गाङ्गिभावस्तन्निमित्तं वाक्यैकत्वं वा।

वेदार्थसङ्ग्रहे च रामानुजैः सर्वेषामेव लौकिकवैदिकशब्दानां परमात्मपर्यन्तबोधकत्वं प्रतिपादितम्। तथाहि "वेदान्तश्रवणेन च व्युत्पत्तिः

पूर्यते"। एवमेव वैदिकास्सर्वे शब्दाः परमात्मपर्यन्तान् स्वार्थान् बोधयन्ति वैदिका एव सर्वे शब्दा वेदादेवोद्धृत्योद्धृत्य परेणैव ब्रह्मणा सर्वपदार्थान् पूर्ववत्सृष्ट्वा तेषु परमात्मपर्यन्तेषु पूर्ववन्नामतया प्रयुक्ताः। तदाह मनुः -

सर्वेषां तु स नामानि कर्माणि विविधानि च।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥ इति

संस्था संस्थानानि रूपाणीति यावत्। आह च भगवान् पराशरः ....

नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम्।
वेदशब्देभ्य एवादौ देवादीनां चकार सः॥ इति।

श्रुतिश्च .... "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति। "सूर्यादीन् पूर्ववत् परिकल्प्य नामानि च पूर्ववच्चकारेत्यर्थः" इति। अनेन च सर्वस्या अपि भाषाया एकपरतया एकार्थबोधकत्वमुक्तं, येन च "भाषा महावाक्य-रूपा" इति वक्तुं पारयामः।

वेदान्तसूत्राणामपि वाक्यकल्पानां परस्पराकाङ्क्षावतां महावाक्यतां कार्यसाधकत्वं च मनसि निधाय बादरायणः शास्त्रं निर्ममे।



# तृतीयपरिच्छेदः
## (व्याकरणम्)

एतावत्पर्यन्तं वैदिकभाषायां महावाक्यस्वरूपं विचारितम्। मीमांसाद्वयं महावाक्यविषये व्याकरणादिशास्त्राणां मार्गदर्शकम् इति वक्तुं पारयामः। यतः व्याकरणादिशास्त्रेषु ये न्यायाः स्वीकृताः ते प्रायेण मीमांसाद्वयगतन्याया-ननुसृत्यैव प्रवर्तन्ते। एकवाक्यतां पुरस्कृत्यैव च तत्र शास्त्रनिर्माणं मुनिभिर-कारीति तच्छास्त्रपरिच्छेदेषु स्फुटीभविष्यति। वैदिकभाषायाः लौकिकभाषा-पेक्षया प्राचीनत्वमेवात्र हेतुः।

लौकिकभाषायां महावाक्यविचारश्च व्याकरणन्यायवैशेषिका-लङ्कारशास्त्रेषु परिदृश्यते। तत्र व्याकरणशास्त्रे व्यावहारिकं पारिभाषिकं च महावाक्यमनुसृत्य द्वैधीगतिः विचारणायाः। तत्र शास्त्रे पाणिन्यादिमुनिवाक्येषु नित्यव्यवहारभाषागतं महावाक्यस्वरूपं प्रसङ्गवशात् विचारितम्। विधिसूत्र-वाक्यैः संज्ञापरिभाषादिसूत्रवाक्यानामेकवाक्यतां मनसि निधायैव स्वशास्त्रं प्रणिनाय पाणिनिः। वाक्यैकवाक्यतया च महावाक्यं प्रभवति। तच्च पारिभाषिकं शास्त्रकृत्कल्पितं विचारणीयम्। पारिभाषिक्या किल पाणिनिः भाषया संचस्कार लौकिकभाषाम्। तत्र तावत् "प्रयोगशरणं व्याकरणम्" इति न्यायमनुसृत्य नित्यव्यवहारगतं महावाक्यं निरूप्यते।

लोकव्यवहारे विवक्षितार्थमनुसृत्य वाक्यं प्रयुज्यते। तथाहि - हरिः पचति। हरिः तण्डुलान् पचति। हरिः काष्ठैः तण्डुलान् पचति। हरिः काष्ठैः

स्थाल्यां तण्डुलान् पचति ... इत्यादिरूपेण वाक्यप्रयोगः लक्ष्यते। एतावदेव वाक्यमिति न कश्चन नियमः। हरिणापि वाक्यपदीये स्वोपज्ञवृत्तावुक्तम्[1] .... "न च वाक्यरूपावधिपरिग्रहे नियमोऽस्ति। कदाचित् देवदत्त गामभ्याजेति। कदाचित् देवदत्त गामभ्याज शुक्लामिति" इति। एतेन "विवक्षामनुसृत्य वाक्य-प्रयोगः क्रियते" इति स्फुटीभवति।

तत्र वाक्यगतपदानां सर्वेषामपि साक्षात् परम्परया वा प्रयुक्तेनाध्याहृतेन वा तिङन्तेन, साक्षात् क्रियाबोधकेन कृदन्तादिपदेन वा सहान्वयः एकार्थ-बोधनाय।

कदाचन वाक्यगर्भितवाक्यानि वर्तन्ते। तत्र अवान्तरवाक्यानां परस्परा-काङ्क्षावतां वाक्यैकवाक्यतया महावाक्यार्थबोधः। तथा हि .... अखण्ड-वाक्यवादस्य पूर्वपक्षमुट्टङ्कयन् भर्तृहरिः विषयममुं स्पष्टमुक्तवान्[2] -

वाक्यानां समुदायश्च य एकार्थप्रसिद्धये।
साकाङ्क्षावयवस्तत्र वाक्यार्थोऽपि न विद्यते॥ इति।

तत्रैव स्वोपज्ञवृत्तिः - "इह गौर्दुह्यताम्, उपाध्यायः पयसा भुक्त्वा मामध्यापयिष्यतीति साधनद्रव्यक्रियान्तरावधिविशिष्टायां क्रियायां यदेकं वाक्यान्तरावयवं वाक्यं वर्तते तदवयवानां साकाङ्क्षाणां पदवदेकार्थेनासम्बन्धे सति वाक्यान्यप्यनर्थकानि सम्पद्यन्ते ...." इति। अत्र उक्तमहावाक्ये गौर्दह्यता-मित्येकमवान्तरवाक्यम्। अस्यावान्तरवाक्यत्वं च "किमर्थं गोदोहनं कार्यमिति साकाङ्क्षत्वात्।" "उपाध्यायः पयसा भुक्त्वा मामध्यापयिष्यती"ति वाक्या-

न्तरेण सा आकाङ्क्षा उपशाम्यते। तेन वाक्ययोरेतयोरेकवाक्यतया महावाक्यार्थबोधो जायते। अन्यतरेण तु प्रयोजनं न सिद्ध्यति।

वाक्ये पदानां साकाङ्क्षाणामेकवाक्यतया सम्पूर्णवाक्यार्थबोधो यथा जायते तथैव महावाक्यगतावान्तरवाक्यानां साकाङ्क्षाणामेकवाक्यतया सम्पूर्णमहावाक्यार्थबोधो जायते।

यथा वाक्यगतपदानां पर्याप्तमर्थवत्त्वं नास्ति, तथैव महावाक्यगतावान्तरवाक्यानामपि पर्याप्तमर्थवत्त्वं नास्ति। अनेन पदवाक्ययोः अवान्तरवाक्यमहावाक्याभ्यां सह यथाक्रमं साम्यं प्रतिपादितं भवति। अखण्डवाक्यनिरूपणावसरे भर्तृहरिणा महावाक्यस्यापोद्धारेणावान्तरवाक्यानामर्थवत्त्वं, पदावन्तरवाक्ययोः सारूप्यं च प्रत्यपादीत्थम्[3] -

अविभक्तेऽपि वाक्यार्थे शक्तिभेदादपोद्धृते।
वाक्यान्तरविभागेन यथोक्तं न विरुद्ध्यते॥ इति।

महावाक्यार्थः यद्यप्यखण्डः, तथाऽपि तत्तन्महावाक्यगतावान्तरवाक्यार्थहेतुभूतशक्त्या अवान्तरवाक्यविभागः बुद्ध्या पृथक् क्रियते। अस्यैव अपोद्धार इति नामान्तरम् इति विषयं स्फुटीकरोत्ययं श्लोकः। पुनर्भर्तृहरिणैवोक्तम्[4] ......

यथा पदसरूपाणां वाक्यानां सम्भवः पृथक्।
तथा वाक्यान्तराभावे स्यादेषां पृथगर्थता॥ इति।

"अपोद्धारेणैव महावाक्ये अवान्तरवाक्यानां सत्ता अभ्यूह्यते, वाक्ये पदानामिव। सिद्धान्तस्तु अखण्डवाक्यमेव" इत्यभिप्रायः।

पदार्थावान्तरवाक्यार्थयोरपि साम्यं प्रतिपादितं भर्तृहरिणा[5], "सापेक्षा ये तु वाक्यार्थाः पदार्थैरेव ते समाः" इति। साकाङ्क्षत्वादवान्तरवाक्यार्थानां न सम्पूर्णवाक्यार्थजनने शक्तिः। तस्मात् तेषु वाक्यार्थव्यपदेशः कार्य इति भावः।

"विभाषा साकाङ्क्षे"[6] इति सूत्रं विरचयता पाणिनिना साकाङ्क्षाणामवान्तरवाक्यानामेकवाक्यतया महावाक्यार्थसिद्धिरसूचि। तथाहि - अभिज्ञावचने उपपदे, धात्वर्थः लक्ष्यलक्षणभावेन साकाङ्क्षश्चेत् भूतानद्यतने लृङ् वा स्यात् (पक्षे लङ्) इति तत्सूत्रार्थः। "अभिजानासि देवदत्त यत्कश्मीरेषु वत्स्यामस्तत्राध्येष्यामहे" इत्युदाहरणम्। अयं महावाक्यात्मको वाक्यसमुदायः साकाङ्क्षावान्तरवाक्यरूपावयवविशिष्टः। अत्र कश्मीरेषु वासो लक्षणम्। अध्ययनं लक्ष्यम्। "अभिजानासि देवदत्त यत्कश्मीरेषु वत्स्याम" इति अवान्तरवाक्यं, शिष्टं "तत्राध्येष्यामहे" इत्यवान्तरवाक्यमपेक्षते सम्पूर्णमहावाक्यार्थबोधनाय। एतं विषयं मनसि कृत्वैव भर्तृहरिणोक्तम्[7] ....

वाक्यानां समुदायश्च य एकार्थप्रसिद्धये।
साकाङ्क्षावयवः ..................॥ इति।

इदमत्रावधेयम् - महावाक्यार्थबोधः अवान्तरवाक्यार्थबोधोत्तरमेव जायते, यथा पदार्थबोधानन्तरमेव वाक्यार्थबोधः। एतच्च प्रतिपादितम् आकाङ्क्षानिरूपणावसरे लघुमञ्जूषायां नागेशभट्टेन।[8] तथाहि ... "अन्वयबोधश्च तदाकाङ्क्षितसकलक्रियाकारकादिविषयो विवक्षितः। एतेन तस्य हेतुत्वे खण्डवाक्यार्थबोधोत्तरं महावाक्यार्थबोधो न स्यादित्यपास्तम्। खण्डबोधस्य क्रियातद्विशेषणकारकतद्विशेषणैतदन्यतरमात्रविषयत्वात्" इति। एतेन

खण्डवाक्यार्थद्वारा महावाक्यार्थबोधस्य आकाङ्क्षायाः हेतुत्वं, तथैव उक्त-प्रकारेण महावाक्यार्थबोधेनैवाकाङ्क्षानिवृत्तिर्भवतीति च सूचितम्। खण्ड-वाक्यमवान्तरवाक्यम्।

महावाक्यार्थज्ञानविषये पक्षद्वयमस्ति - खण्डवाक्यार्थानां खले कपोत न्यायेन युगपत्सम्मेळनेन महावाक्यार्थधीरित्येकः पक्षः। खण्डवाक्यार्थज्ञानानन्तरं, पूर्वपूर्वावान्तरवाक्यार्थस्मरणेन तत्संस्कारद्वारा राजपुरुषप्रवेशन्यायेन महा-वाक्यार्थज्ञानम् इत्यपरः। विषयोऽयं प्रतिपादितस्तात्पर्यनिरूपणावसरे लघुमञ्जूषायाम्।[9] तथाहि .... "अत्र श्रौततावत्पदार्थज्ञानानाम् आकाङ्क्षादि-ज्ञानानां च नष्टत्वेऽपि तेषां समूहालम्बनस्मरणात्, तत्संस्काराद्वाऽन्वयबोधः। अयमेव खलेकपोतन्यायेन बोधः। यदा तु क्रमेणैवोद्बोधकसमवधाना-त्तत्तत्खण्डवाक्यार्थबोधोत्तरं पूर्वपूर्वस्मरणात्, तत्संस्काराद्वा महावाक्यार्थ-बोधस्तदा राजपुरप्रवेशन्यायेन बोधः" इति। "कपोताः वृद्धयुवशिश्वादिभेदं विना यथा खले युगपत् पतन्ति तथैव खण्डवाक्यार्थानां ज्ञानानन्तरं युगपदेव महावाक्यार्थधीः जायते। अत्र क्रमो नास्त्यवान्तरवाक्यानाम्। पक्षान्तरे यथा कार्यार्थिनः पुरुषाः राजपुरं विशृङ्खलत्वं विहाय श्रेणीभूय प्रविशन्ति तथा खण्डवाक्यानां क्रमेणैव प्रथमतो बोधे, ततः पूर्वपूर्वस्मरणेन, आहोस्वित् पूर्व-पूर्वखण्डवाक्यार्थसंस्कारात् महावाक्यार्थधीः सञ्जायते" इत्यर्थः।

अर्थानुरोधेनैव महावाक्यं समुदाये परिसमाप्तं, प्रत्येकं परिसमाप्तमिति द्विविधम्। अयमत्र विशेषः ... महावाक्यमेव अङ्गिवाक्यमित्युच्यते। अवान्तर-वाक्यानि चाङ्गवाक्यानि। महावाक्यमेकमेव अङ्गवाक्यानामर्थं सूचयति। तत्र

प्रधानत्वात् अङ्गिवाक्यस्य महावाक्यमिति व्यवहारः। तस्य अङ्गिवाक्यस्य अवान्तरवाक्यैः प्रत्येकमन्वयः। अयं पक्षः प्रत्येकपरिसमाप्तिः इत्युच्यते। यत्रैकेन महावाक्येन अवान्तरवाक्यसमुदायस्यार्थः संसूच्यते स पक्षः समुदायपरिसमाप्तिरित्युच्यते।

"रामवद्वर्तितव्यं न रावणवत्" इति वाक्यस्य महावाक्यसंज्ञा प्रत्येकपरिसमाप्तिन्यायेन। रामायणगतानां सर्वेषामपि अवान्तरवाक्यानामेतन्महावाक्यार्थबोधने विश्रान्तिः। एवं भारतमहावाक्यमपि ..... "धर्मराजादिवद्वर्तितव्यं, न तु दुर्योधनादिवत्" इति। प्रतिकाव्यमप्येवं महावाक्यं वर्तते। तच्च तत्तत्काव्यगतानामवान्तरवाक्यानां पिण्डीभूतमर्थं प्रकाशयति। समुदायसमाप्तिश्च सकलतत्तत्काव्यगतावान्तरवाक्यसमुदायस्यार्थम् एकमेव वक्तीत्यङ्गीकारेण।

अयं विषयः वाक्यपदीये भर्तृहरिणा प्रतिपादितोऽस्ति।[10] तथाहि .....

वाक्यान्तराणां प्रत्येकं समाप्तिः कैश्चिदिष्यते।
रूपान्तरेण युक्तानां वाक्यानां तेन सङ्ग्रहः ॥ इति।

"एकेषां मते प्रधानवाक्यस्यावान्तरवाक्यैः प्रत्येकमन्वयः, केषाञ्चन-मते प्रधानवाक्येन अवान्तरवाक्यार्थसङ्ग्रहः क्रियते। एवं प्रत्येकसमुदायपरिसमाप्ती महावाक्यविषये" इति भावः।

इदञ्चात्रावधेयं .... महावाक्यं शाब्दं स्वरूपमनुसृत्यैव वर्तते। अर्थगौरवमनुसृत्य च महावाक्यसंज्ञा औपचारिकी। तथाहि .... अङ्गिवाक्यस्या-

ङ्गवाक्यैस्सहान्वयेन दीर्घदीर्घतरं महावाक्यं सम्पद्यते। अवान्तरवाक्यसमुदाय-बोधने च महावाक्यस्य शब्दस्वरूपे नाधिक्यम्। किन्तु अर्थगौरवविषये।

वाक्यपदीयव्याख्यानभूतायाम् अम्बाकर्त्र्यां श्लोकोऽयमुक्तपक्षद्वय-बोधकः उट्टङ्कितः। तथाहि ....

अभ्युद्धृता वसुमती दलितं रिपूरः<br>
प्रत्याहता बलवता बलिराज्यलक्ष्मीः।<br>
एकत्र जन्मनि कृतं तदनेन यूना<br>
जन्मत्रये यदकरोत्पुरुषः पुराणः।। इति।

राज्ञः कस्यचन वर्णनमिदम्। श्लोकस्य पूर्वार्धं वाक्यत्रयात्मकम्। तानि त्रीण्यवान्तरवाक्यानि। "पुराणः पुरुषः जन्मत्रये यदकरोत् तदनेन यूना एकत्र जन्मनि कृतम्" इति उत्तरार्धमेकं महावाक्यम्। त्रीण्यपि अवान्तरवाक्यानि प्रत्येकं महावाक्येनानेनान्वयं लभन्ते। "आकाङ्क्षायोग्यतासत्तिवशात् अङ्ग-वाक्याङ्गिवाक्ययोः मिथस्समन्वयः सम्भवति।"



# चतुर्थपरिच्छेदः

## (व्याकरणम्)

प्रायेण शास्त्रेषु दर्शनेषु च उपदेशः एकवाक्यतामाश्रित्यैव क्रियते। पुनरुक्तिं विना लाघवेनोपदेशरूपप्रयोजनमेवात्र हेतुः। तदुक्तं कुमारिलभट्ट-पादेन[1] ...

सर्वाण्येव हि शास्त्राणि स्वप्रदेशान्तरैस्सह।
एकवाक्यतया युक्तमुपदेशं प्रतन्वते॥ इति।

अत्र शास्त्रशब्दस्य सूत्रमित्यर्थः। अन्यप्रदेशगतसूत्रैस्सहं एकवाक्यतया सर्वाणि सूत्राणि उपदेशं प्रकुर्वन्तीति श्लोकार्थः। व्याकरणशास्त्रमधिकृत्य कुमारिलः तत्रैव व्यवृणोदित्थम् ..... "विशेषेण तु व्याकरणे। तत्र ह्येकैकस्मिन्पक्षे प्रायेणाष्टाध्यायी व्याप्रियते। इह चैतावता प्रत्ययविधिः परिपूर्यते। प्रत्ययः, परश्च, आद्युदात्तश्च, अनुदात्तौ सुप्पितौ, धातोः, तत्रोपपदं सप्तमीस्थं, कृदतिङ्, वाऽसरूपोऽस्त्रियाम्, वर्तमाने लट्, कर्तरि कृत्, लः कर्मणि च भावे चाकर्मकेभ्यः, लस्य तिबादयः, अनुदात्तङित आत्मनेपदम्, शेषात्कर्तरि परस्मैपदं, युष्मदस्मदुपपदादिषु मध्यमादयः, तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः, तान्येकवचनद्विवचनबहुवचनान्येकशः, बहुषु बहुवचनम्, द्व्येकयोर्द्विवचनैकवचने इति। पराणि च संज्ञापरिभाषादिशास्त्राणि सर्वाण्येकं वाक्यम्" इति। इदं च स्पष्टं "ङ्याप्प्रातिपदिकात्"[2] इति सूत्रे भाष्यकैयटयोः। वाक्यपदीये भर्तृहरिणाऽपि[3] "वाक्यात् शब्दार्थाः प्रविभज्यन्ते" इत्युक्तम्।

भिन्नप्रकरणगतावान्तरवाक्यानामेकवाक्यतया सिद्धात् महावाक्यात् शब्दार्थाः प्रविभज्यन्ते इति तस्यार्थः। अत्र वाक्यशब्दस्य महावाक्यमित्यर्थ इति व्याख्यातारः।[4] कुमारिलेनाप्युक्तं [5]..... "स्वार्थबोधे समाप्तानामङ्गाङ्गित्व-व्यपेक्षया। वाक्यानामेकवाक्यत्वं पुनस्संहत्य जायते" इति।

अयं चोपन्यासः इतरशास्त्रगतैकवाक्यतायाः उपलक्षणम्।

लाघवेनोपदेशार्थमेव पाणिनिना एकवाक्यता स्वीकृताऽष्टाध्याय्याम्। स्वोपज्ञं गुणवृद्ध्यादिपदानि परिकल्प्य पाणिनिः पारिभाषिक्या भाषया लौकिकीं भाषां साधितवान्। इदं च "स्वं रूपं शब्दस्याशब्दसंज्ञा"[6] इति सूत्रेण स्पष्टीभवति। तथाहि .... लोके शब्देनार्थो गृह्यते, अत्र तु शब्दशास्त्रे शब्दस्य स्वरूपमेव ग्राह्यम्, न त्वर्थः। अनेन "अग्नेर्ढक्"[7] इत्यादि सूत्रेषु "अग्निशब्देन अकारादिवर्णक्रमविशिष्टः शब्द एव ग्राह्यः, तस्मादेव ढगि"त्यादिरूपेण वाक्यार्थः, तेन आग्नेयादिरूपसिद्धिः। यास्ताः गुणवृद्ध्यादिसंज्ञाः तासां विषये तु अर्थ एक ग्राह्यः, न तु शब्द इत्यंशमपि सूत्रमिदं बोधयति। स्वं रूपमिति सूत्रं सर्वस्यापि शास्त्रस्य अत्यन्तोपयोगि। तत्तत् सूत्रेषु गत्वा सूत्रवाक्यैरेक-वाक्यतां प्राप्य तत्तत्संज्ञासंज्ञिशब्दानाम् अर्थबोधं जनयत् पारिभाषिकीं भाषां स्फुटतरं बोधयति।

"नाज्झलौ"[8]विति सूत्रे महाभाष्ये इकारशकारयोः सावर्ण्यं नास्तीति "वाक्यापरिसमाप्ति"न्यायेन समाहितम्, यत्र वाक्यशब्देन महावाक्यमेवोद्दिष्टम्। महावाक्यार्थपरिसमाप्तेः इकारशकारयोस्सवर्णसंज्ञा नास्तीति भाष्यकाराशयः। अयं ग्रन्थो दृश्यते भाष्ये ... "वाक्यापरिसमाप्तेर्वा पुनस्सिद्धमेतत्। किमिदं

वाक्यापरिसमाप्तेरिति वर्णानामुपदेशस्तावत्। उपदेशोत्तरकालेत्संज्ञा। इत्संज्ञोत्तरकाल आदिरन्त्येन सहेता इति प्रत्याहारः। प्रत्याहारोत्तरकाला सवर्णसंज्ञा। सवर्णसंज्ञोत्तरकालम् अणुदित्सवर्णस्य चाप्रत्ययः इति सवर्णग्रहणम्। एतेन सवर्णेन समुदितेन वाक्येनाऽन्यत्र सवर्णानां ग्रहणं भवति" इति। अनेन च "चतुर्दशशिवसूत्राणाम्", "उपदेशेऽजनुनासिक इत्"[9] इत्यादि इत्संज्ञाविधायसूत्राणाम्, "आदिरन्त्येन सहेता"[10] इति प्रत्याहारविधायकसूत्रस्य, "तुल्यास्यप्रयत्नं सवर्णम्"[11] इति सवर्णसंज्ञासूत्रस्य, "अणुदित्सवर्णस्य"[12] इति सवर्णग्रहणसूत्रस्य च एकवाक्यतया सिद्धेन महावाक्येनैव सवर्णानां ग्रहणं सिद्ध्यति। न तु केवलं "तुल्यास्यप्रयत्नं सवर्णम्" इति सूत्रवाक्येन इत्यर्थः सिद्ध्यति।

अष्टाध्याय्यां षड्विधं सूत्रं पश्यामः। संज्ञा-परिभाषा-विधि-नियम-अतिदेश-अधिकारभेदात्। सर्वथा लाघवमेवैवं सूत्राणां विभागे मुख्यो हेतुः। विशिष्य संज्ञापरिभाषाधिकारसूत्राणां पौनरुक्त्यं विना विधिसूत्रवाक्यैस्सहान्वयेनैकवाक्यतां परिकल्प्य स्वोपज्ञां प्रकटीचकार सूत्रकारः। सूत्ररचनायां च पाणिनिः प्रायशः प्राधान्यमनुसृत्य संज्ञापरिभाषाधिकारविधिनियमातिदेशसूत्राणि यथाक्रमं रचयामास। तत्र च विधिसूत्रमेव मुख्यं, कार्यसाधकत्वात्। विधिसूत्रगतसंज्ञापदज्ञानार्थं, तत्तच्छास्त्रीयनियमार्थं चोपयुज्यन्ते इति कृत्वा संज्ञापरिभाषासूत्राणां गुणसूत्राणीति व्यवहारः।

गुणसूत्रवाक्यानां विधिसूत्रवाक्यैस्सह एकवाक्यतया महावाक्यार्थबोधे जाते सम्पूर्णार्थावगतिः तद्द्वारा लक्ष्यसंस्कारश्च जायते। एवं च न केवलं गुणसूत्रवाक्यानां, न वा केवलं विधिसूत्रवाक्यानां सम्पूर्णार्थबोधकत्वं, कार्यसाधकत्वं चेति सिद्ध्यति।

अत एव च गुणसूत्रवाक्यानां विधिसूत्रवाक्यैस्सह परस्पराकाङ्क्षा-वशेन एकवाक्यता परिकल्पिता सूत्रकृता। तत्र पक्षद्वयमुक्तं भाष्यकारेण[13] ... यथोद्देशपक्षः कार्यकालपक्षश्चेति।

पाणिनिना यस्मिन्देशे गुणसूत्राण्युच्चारितानि तस्मिन्नेव देशे सूत्रार्थ-बोधनानन्तरं तत्तत्संज्ञापरिभाषासम्बद्धविधिसूत्राणामत्रोपस्थितिः। ततश्च प्रत्येकम्, विधिसूत्रवाक्यैः गुणसूत्रवाक्यानामेकवाक्यता। तद्यथा "वृद्धिरादैच्"[14] इति वृद्धिसंज्ञासूत्रम्। आदैचः वृद्धिसंज्ञकाः इत्यर्थः। अष्टाध्याय्यां यानि विधिसूत्राणि वृद्धिपदाङ्कितानि, तानि सर्वाण्यपि वृद्धिपदार्थज्ञानरूपसंस्काराय इदं सूत्रमुपगच्छन्ति। तथाहि .... "वृद्धिरेचि"[15] इति वृद्धिविधायकसूत्रम्। "संहितायाम्"[16] "एकः पूर्वपरयोः"[17] इति सूत्रे अधिकृते। "आत्"[18] इतिपदम् अनुवर्तते। "संहितायामादेचि परे पूर्वपरयोरेका वृद्धिः स्यादि"ति विधिसूत्रवाक्यं सम्पन्नम्। उक्तवाक्यगतवृद्धिपदज्ञानञ्च "वृद्धिरादैच्" इति संज्ञासूत्रवाक्येन संज्ञासूत्रस्थले एव जायते। तस्मात् विधिसूत्रवाक्यं संज्ञासूत्रस्थलं प्रति नीयते वृद्धिपदसंस्काराय। तत्र च विधिसूत्रवाक्यस्य "आदैच्" इति पदेन सह पदैकवाक्यता। तथा च "संहितायामादेचि पूर्वपरयोरेका वृद्धिरादेशः स्यात्" इति महावाक्यं सिद्धम्। तेन च गङ्गौघः इत्यादिषु वृद्धिः।

परिभाषाविषयेऽप्येवमेव। तथाहि ...... "रायो हलि"[19] इति विधिसूत्रम्। "अष्टन आ विभक्तौ"[20] इति सूत्रात् "आ" "विभक्तौ" इति पदे अनुवर्तेते। हलि विभक्तौ रैशब्दस्य आकरः स्यादिति विधिसूत्रवाक्यं सिद्धम्। हलि इति सप्तम्यन्तपदस्य संस्कारार्थं विधिसूत्रवाक्यं "तस्मिन्निति निर्दिष्टे

पूर्वस्य"[21] इति सूत्रप्रदेशं नीयते। सा च परिभाषा "सप्तम्यन्तेन विधीयमानं कार्यं वर्णान्तराव्यवहितस्य पूर्वस्य भवती"ति सूचयति। तथा च अस्याः परिभाषायाः पदोपस्थापकत्वात् तत्परिभाषार्थवाचकेन पूर्वस्येतिपदेन सह विधिसूत्रवाक्यस्य पदैकवाक्यता। तेन च "रैशब्दात् हलि विभक्तौ परे पूर्वस्य आकारादेशः स्यादि"ति महावाक्यार्थः फलति। तेन राः इत्यादिरूपसिद्धिः। यथोद्देशपक्षे सपादसप्ताध्यायीस्थगुणसूत्राणामेव विधिसूत्रवाक्यैरेकवाक्यता। "पूर्वत्रासिद्धम्"[22] इति नियमात् त्रिपादीस्थविधिसूत्राणां सपादसप्ताध्यायीं प्रत्यसिद्धत्वात्।

कार्यकालमित्यस्य च कार्येण विधायकसूत्रेण काल्यते आकृष्यते इत्यर्थः। यानि यानि गुणसूत्रैः स्वसंस्कारायापेक्षितानि तानि सर्वाण्यपि विधि-सूत्रप्रदेशमानीयन्ते। ततश्च विधिसूत्रवाक्येन सह गुणसूत्रवाक्यानामेक-वाक्यता। अलोन्त्यस्येत्यादिपरिभाषाणां संज्ञानां च विधिसूत्रदेशे विधिसूत्र-वाक्येन सह वाक्यैकवाक्यता। पदोपस्थापकानां तु तस्मिन्नित्यादिपरिभाषाणां विधिसूत्रदेशे उपस्थित्यनन्तरं तत्तत्परिभाषोपस्थितस्य पूर्वस्येत्यादिपदस्य विधिसूत्रवाक्येन सह पदैकवाक्यता। संज्ञासूत्रस्य तु कार्यकालपक्षे न पृथग्वाक्यार्थबोधः। किन्तु विधिसूत्रवाक्येन सहैव।

अधिकारसूत्राणामपि प्रयोजनं लाघवमेव। तत्र कानिचन अधिकार-सूत्राणि सुबहूनि विधिसूत्राण्यभिव्याप्य स्वेषां विश्वतोमुखत्वं ध्वनयन्ति। यथा ...... "विभाषा"[23], "पदस्य"[24], "अङ्गस्य"[25] इत्यादि। अधिकारसूत्राणां च स्वस्थले न वाक्यार्थबोधजनकत्वम्, किन्तु परिभाषाणामिव विधिशास्त्रैक-

तापन्नत्वेन महावाक्यार्थबोधजननद्वारा कार्योपयोगित्वम्। अत एव "षष्ठी स्थानेयोगा"[26] इति सूत्रे कैयटेन "कश्चित् परिभाषारूप" इति उक्तम्। नागेशेन च परिभाषेन्दुशेखरे "यथोद्देश्यं संज्ञापरिभाषम्" इति परिभाषाव्याख्याने "अधिकारशब्देन पारार्थ्यात्परिभाषाप्युच्यते" इत्युक्तम्।

"षष्ठी स्थानेयोगा" इति सूत्रे भाष्ये "अधिकारो नाम त्रिप्रकारः। कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति, यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयती"ति अधिकार सूत्राणां विधिसूत्रोपयोगित्वं स्पष्टीचकार भाष्यकारः।

अपवादसूत्रवाक्यानामपि विध्येकवाक्यतयैव बोधः। "कर्तरि कृत्"[27] इति सूत्रे महाभाष्ये "आढ्यसुभगस्थूलनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः-करणे ख्युन्"[28] इत्यादिसूत्रैः करणाद्यर्थेषु विहितानां ख्यानादिकृत्प्रत्ययानां कर्तरि प्रतिषेधो वक्तव्य इत्याशङ्क्य एकवाक्यतया समाहितम्। तथाहि .... कृत्प्रत्ययाः "कर्तरि कृत्" इत्युपसर्गशास्त्रेण कर्त्रर्थे विहिताः। ख्यानुदयस्तु करणादिषु आढ्यसुभगेत्यादिभिः अपवादसूत्रैर्विहिताः। अत्र द्वयोरपि विध्यपवादसूत्रयोः भिन्नदेशपठितयोः पृथक् पृथक् वाक्यार्थो जायते। अनयोश्च भिन्नप्रदेशत्वेन न एकवाक्यता, किन्तु नानावाक्यत्वमेव। तथा च ख्युनादीनां करणाद्यर्थेषु प्रथमं प्रवृत्तिः। इदं च पाणिनेरनिष्टम्। "ख्युनादीनां करणादिष्वेव प्रवृत्तिः शिष्टानां च कर्तरि प्रवृत्तिः पाणिनेरभिमतम्। प्रयोगाश्चात्र प्रमाणम्। प्रयोगेषु ख्युनादीनां कर्तरि प्रवृत्तिं न पश्यामः। एतच्च विध्यपवादयोरेकवाक्यतयैव साधनीयं भवति। भाष्यकारेण "विदेशस्थमपि सदेकं वाक्यं भवति"[29]

इति ब्रुवता, "एकवाक्यतया महावाक्यार्थबोधेन करणादिषु विहितान् ख्युनादि-प्रत्ययान् अपहाय कृतः कर्तरि भवन्ति" इति रूपेण विध्यपवादसूत्रवाक्य-योरेकवाक्यत्वं परिकल्पनीयमित्यबोधि।

अयमत्र विशेषः ... लोके तावत् पूर्वाह्णे "ब्राह्मणभोजनकाले दधि ब्राह्मणेभ्यो दीयताम्" इत्युक्त्वा, अपराह्णे "तक्रं कौण्डिन्याय दीयताम्" इत्युक्तं चेत् कालभेदात् तक्रेण दधि न बाध्यते। शास्त्रे च एतत्समां सरणिं पश्यामः। विधिनिषेधशास्त्रेषु सूत्रकारेण विभिन्नकालेषु विभिन्नोच्चरितेष्वपि (विभिन्नप्रदेशेषु) आकाङ्क्षावशादध्येतॄणां समकाले एव एकवाक्यतया बोधः।

किञ्च सामान्यविशेषशास्त्रयोः संहत्य ज्ञानविषये द्वैविध्यं वर्तते। तथाहि .... लक्ष्यैकचक्षुष्काणां पाणिन्यादिमुनीनां वक्ष्यमाणनिषेधसूत्र-तात्पर्यस्य प्रथममेवावगमः। तेन च उत्सर्गसूत्रस्य सङ्कुचितवाक्यार्थबोधकत्वम्। तद्द्वारा निषेधसूत्रवाक्यार्थस्य गतार्थत्वं च सम्भवति। तद्यथा .. "कर्मण्यण्"[30] इति सूत्रेण धातोः कर्मणि अण् प्रत्ययो विहितः। "आतोऽनुपसर्गे कः"[31] इति सूत्रेण च अनुपसर्गे उपपदे आदन्ताद्धातोः कर्मण्यणं बाधित्वा कप्रत्ययो विहितः। तथा च "आतोनुपसर्गे कः" इति अपवादसूत्रवाक्यार्थोऽपि "कर्मण्यण्" सूत्रलब्धेन "कर्मण्युपपदे बाधकानाक्रान्तधातुभ्योऽण् प्रत्ययो भवती"ति सङ्कुचितवाक्यार्थेनैव बोध्यते।

लक्षणैकचक्षुष्काणामस्मादृशां तु उत्सर्गापवादसूत्रवाक्ययोरेक-वाक्यतयैव बोधः। अत एव "प्रकल्प्य चापवादविषयं तत उत्सर्गः प्रवर्तते" इति न्याय आश्रितो वैयाकरणैः। निषेधवाक्यानां बोधानन्तरमेव विधिवाक्यानां

प्रवृत्तिरुचिता इति भाष्यकाराः प्रतिपादयामासुः।[32] लोकन्यायश्चात्र वर्तते .. "यो हि भुक्तवन्तं प्रति ब्रूयात्, मा भुक्था इति किं तेन कृतं स्यात् ?" इति। विधिसूत्रवाक्येन विधेः प्रवृत्तौ निषेधसूत्रवाक्यार्थबोधः गतजलसेतुबन्धन-मित्यर्थः। तस्मात् निषेधविधिसूत्रवाक्ययोर्वाक्यैकवाक्यतया महावाक्यार्थ-बोधः, तत्समनन्तरमेव विधेः प्रवृत्तिः इति निश्चिनुमः।

लोके च वक्तुः उत्सर्गवाक्यप्रयोगकाले एव अपवादवाक्यस्य वक्ष्य-माणस्य बोधः सम्भवति। श्रोतुस्तु अपवादवाक्यसमनन्तरमेव उत्सर्गाप-वादवाक्यसमन्वयेन महावाक्यार्थबोधः। तथाहि .... "ब्राह्मणेभ्यो दधि दीयतामि"त्युत्सर्गवाक्यम्। "तक्रं कौण्डिन्याय" इत्यपवादवाक्यम्। वक्तु-स्तावत् उत्सर्गवाक्यप्रयोगकाले एव "कौण्डिन्यं विना ब्राह्मणेभ्यः दधि दातव्यम्" इति अपवादवाक्यतात्पर्यसहितः उत्सर्गवाक्यार्थबोधः सम्भवति। श्रोतुस्तु अपवादवाक्यश्रवणानन्तरमेव तादृशबोधः इति विवेकः।

अयं विषयः भर्तृहरिणा श्लोकद्वयेन प्रत्यपादि [33] ....

उत्सर्गवाक्ये यत्यक्तमशब्दमिव शब्दवत्।
तद्बाधकेषु वाक्येषु श्रुतमन्यत्र गम्यते॥
ब्राह्मणानां श्रुतिर्दध्नि प्रक्रान्ता माठरं विना।
माठरस्तक्रसम्बन्धात् तत्राचष्टे यथार्थताम्॥ इति।

अपवादवाक्यश्रवणानन्तरमेव योऽर्थः निषेधरूपः ज्ञायते सः उत्सर्ग-वाक्येनैव गम्यते। ब्राह्मणेभ्यो दधि दीयताम् इति वचनम्। (तक्रं माठरायेति

वाक्येनैकवाक्यतां प्राप्य) माठरवर्जं ब्राह्मणेभ्यो दधि दातव्यमित्यर्थं गमय-तीति भर्तृहरेरभिप्रायः।

उत्सर्गापवादसूत्रयोः भिन्नाख्यातयोगेन भिन्नवाक्यत्वेऽपि एकवाक्यता। तथा च महावाक्यार्थबोधः तदनन्तरं लक्ष्ये लक्षणप्रवृत्तिश्च। भर्तृहरिश्चामुं विषयं प्रत्यपादयत्।[34]

अनेकाख्यातयोगेऽपि वाक्यं न्याय्यापवादयोः।
एकमेवेष्यते कैश्चित् भिन्नरूपमिव स्थितम्॥ इति।

भिन्नधातुसम्बद्धत्वात् वाक्यभेदेऽपि सामान्यविशेषसूत्रवाक्ययो-रेकवाक्यतां केचन वाञ्छन्तीति भावः।

उत्सर्गापवादसूत्रवाक्ययोः परस्पराकाङ्क्षावशात् शेषशेषिभावः। ततश्च वाक्यैकारवाक्यता, तद्द्वारा महावाक्यार्थबोधः सिद्ध्यति। अत्र भर्तृहरेरङ्गीकारः दृश्यते[35] ...

विशेषविधिनार्थित्वात् वाक्यशेषोऽनुमीयते।
विशेषवन्निवर्त्येऽर्थे तस्मात्तुल्यं व्यपेक्षणम्॥ इति।

अपवादसूत्रवाक्यस्य सामान्यसूत्रवाक्याकाङ्क्षा वर्तते, सम्पूर्णार्थ-बोधनाय। एवं च सामान्यवाक्यस्य शेषमेवापवादवाक्यमित्यनुमानप्रमाणेन सिद्ध्यति। तथैव विशेषसूत्रवाक्यसदृशस्य निषेधवाक्यस्य नियमसूत्रवाक्यस्य च सामान्यवाक्यशेषत्वमनुमिनुमः इति हरिणाभिप्रेतम्।

इदमत्र वक्तव्यं भवति - शेषशेषिभावः, अङ्गाङ्गिभावः, अवयवाय-विभावः इत्यनर्थान्तरम्। पूर्वमीमांसायां "दर्शपूर्णमासाभ्यां यजेत" इत्याद्यङ्गि-

वाक्यानां, "समिधो यजति" इत्याद्यङ्गवाक्यानां च अङ्गाङ्गिभावेन उपकार्योपकारकभाव इति नियमः वर्तते। कुमारिलः प्राह [36] ....

स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥ इति।

तद्वारा तयोर्वाक्ययोरेकवाक्यतां न्यरूपयन्मीमांसकाः। तथैवाऽत्रापि शब्दशास्त्रे सामान्यविशेषवाक्ययोः, विधिनियमवाक्ययोः, विधिप्रतिषेधवाक्ययोश्च शेषशेषिभावेन एकवाक्यतां प्रत्यपादयद् भर्तृहरिः।

उक्तविषयमेवेयं हरिकारिका विस्तरेण सोदाहरणं निरूपयति [37] ....

नियमः प्रतिषेधश्च विधिशेषस्तथा सति।
द्वितीये यो लुगाख्यातस्तच्छेषमलुकं विदुः ॥ इति।

नियमवाक्यं प्रतिषेधवाक्यं च विधिवाक्यशेषभूतमेव। अस्मिन् विषये द्वितीयाध्यायगतं "सुपो धातुप्रातिपदिकयोः"[38] इति लुग्विधायकसूत्रं, तच्छेषत्वेनोक्तम् "अलुगुत्तरपदे"[39] इति षष्ठ सूत्रं च उदाहरन्ति वैयाकरणा इति भावः।

"कर्तरि कृत्"[40] इति सूत्रे भाष्ये विदेशस्थयोः उत्सर्गापवादयोरेकवाक्यत्वम् आशङ्क्य "विदेशस्थमपि सदेकं वाक्यं भवति, तद्यथा ... द्वितीयेऽध्याये लुगुच्यते। तस्य चतुर्थषष्ठयोरलुगुच्यतेऽपवादः" इत्युक्तम्। एतेन उत्सर्गापवादयोरेकवाक्यतया महावाक्यार्थबोधः। तदनन्तरं च विधिसूत्रस्य कार्ये प्रवृत्तिः।

अयमत्र विवेकः ..... परिभाषारूपस्य नियमसूत्रस्य विधिसूत्रवाक्येन सह पदैकवाक्यता। तद्यथा "कृत्तद्धितसमासाश्च"[41] इति नियमसूत्रम्, "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्"[42] इति विधिसूत्रस्य शेषभूतम्। तथा च धातुं, प्रत्ययं, प्रत्ययान्तं च विहाय अर्थवच्छब्दस्वरूपं, कृत्तद्धितसमासाश्च प्रातिपदिकसंज्ञानि स्युरिति महावाक्यार्थः सिद्ध्यति।

प्रतिषेधवाक्यस्य विधिवाक्यशेषत्वं वाक्यैकवाक्यता च सम्भवति। तद्यथा ..... "सुपो धातुप्रातिपदिकयोः"[43] इति सूत्रेण "धातुप्रातिपदिकयोः परस्य सुपो लुग्भवति" इति वाक्यार्थः सिद्ध्यति। "अलुगुत्तरपदे"[44] इति सूत्रेण "उत्तरपदे परतः सुपो न लुक्" इति वाक्यार्थः सिद्ध्यति। अनयोर्वाक्ययोः परस्पराकाङ्क्षावशेन वाक्यैकवाक्यत्वम्। तेन च "धातुप्रातिपदिकयोः सुपः लुग्भवति, न तूत्तरपदे" इति महावाक्यार्थः सिद्ध्यति।

एवं च परस्पराकाङ्क्षावशात् पदैकवाक्यता, वाक्यैकवाक्यता च सम्भवति व्याकरणसूत्राणाम्। तत्र अवान्तरवाक्यानां नार्थबोधकत्वं प्रामाण्यं वा। महावाक्यस्यैव सम्पूर्णार्थबोधकत्वं प्रामाण्यं च। "महावाक्येनैव व्याकरण-शास्त्रे कार्याणि साध्यन्ते" इति निश्चिनुमः।



# पञ्चमपरिच्छेदः
## (न्यायवैशेषिके)

अथ न्यायवैशेषिकेऽनुसृत्य महावाक्यविचार आरभ्यते। प्रमाणशास्त्रमिति प्रसिद्धे न्यायशास्त्रे प्रत्यक्षानुमानोपमानशब्दाख्यानि चत्वारि प्रमाणान्यङ्गीकृतानि। तत्र परोक्षवस्तुविषयकज्ञानेऽनुमानप्रमाणमुपयुज्यते (अनुमानं च न्यायवैशेषिकयोरविशिष्टं प्रतिपादितम्)। तच्चानुमानं द्विविधम्। स्वार्थानुमानं, परार्थानुमानं चेति। तयोश्च परोक्षवस्तुविषयकज्ञानमन्यस्य जनस्य जनयितुं यत्पञ्चावयवविशिष्टं वाक्यं प्रयुज्यते, तदेव परार्थानुमानमित्युच्यते। तत्र अवान्तरवाक्यभूतानां पञ्चानां वाक्यानामेकवाक्यतया महावाक्यार्थबोधे जाते तेन परार्थानुमानज्ञानं जायते। इदमेव परार्थानुमानमिति न्याय इति चोच्यते। तदत्र प्रतिपाद्यते।

हेत्वादिभिः परोक्षवस्तुविषयकं ज्ञानं यज्जायते प्रायेण तदेवानुमानम्। तथाहि - महानसादिषु धूमवह्न्योरेकत्रावस्थानं, तप्तायोगोळादिषु वह्निसत्त्वेऽपि धूमाभावं, वह्न्यभावस्थलेषु जलह्रदादिषु धूमाभावं च कश्चित् पश्यति। ततश्चानेनानुभवत्रयेण "यत्र यत्र धूमस्तत्र तत्र वह्निः, यत्र यत्र वह्निः तत्र तत्र सर्वत्राऽपि न धूमः, यत्र यत्र वह्न्यभावः तत्र तत्र सर्वत्राऽपि धूमाभावः" इति स्वयं निश्चिनोति। मार्गमध्ये च कदाचन पर्वतसमीपे धूमं दृष्ट्वा पूर्वप्राप्तानुभवपूर्वकनिश्चयज्ञानेन स्वयमनुमीय, परमनुमापयति, पञ्चावयववाक्यप्रयोगेण। इदमेव परार्थानुमानमित्युच्यते।

स्वार्थानुमाने लिङ्गपरामर्श एव कारणम्। महानसादिषु धूमवह्न्योः सामानाधिकरण्यं दृष्ट्वा यत्र धूमस्तत्राग्निरिति व्याप्तिं मनसि निधाय, पर्वतगतधूमं दृष्ट्वा, व्याप्तिस्मरणेन पर्वतोऽयं वह्निमान्, धूमवत्त्वात् इति लिङ्गपरामर्शं यत् स्वयं करोति तत् स्वार्थानुमानम्।

स्वार्थानुमानवता जनेन परजनप्रतिपत्त्यर्थं यत्पञ्चावयववाक्यं प्रयुज्यते तदेव परार्थानुमानम्। यथा .... "पर्वतो वह्निमान्। धूमवत्त्वात्। यो यो धूमवान् स स वह्निमान्, यथा महानसः। तथा चायम्। तस्मात्तथा" इति। पाण्याद्यवयवसङ्घातस्य शरीरमिति यथा व्यवहारः तथैवात्राऽपि पञ्चावयवसङ्घातस्य परार्थानुमानमिति व्यवहारः। अवयवेषु च प्रत्येकं कतमेनाऽप्यवयवेन परार्थानुमानं साधयितुं न पारयामः। तेनावयवपदसार्थक्यं स्फुटं गोचरीभवति। तथा च अवयवभूतानामवान्तरवाक्यानामेकवाक्यतया महावाक्यार्थबोधद्वारा परार्थानुमानं साधयन्ति। परार्थानुमानमेव, न्याय इति, तत्प्रतिपादिकपञ्चावयववाक्यमेव न्यायवाक्यमिति चोच्यते।

उक्तोदाहरणे वह्निमत्त्वं धर्मः। पर्वतः पक्षः। साध्यो वह्निः। धूम एव लिङ्गं हेतुरिति चोच्यते। धूमस्य पर्वतादिवृत्तित्वं पक्षधर्मतेत्युच्यते। अनया सामग्र्या व्याप्तिः साध्यते। यत्र यत्र धूमस्तत्र तत्र वह्निरिति हेतुसाध्ययोर्नियतत्वं सामानाधिकरण्यम् अन्वयव्याप्तिरित्यप्युच्यते। यत्र वह्न्यभावः तत्र धूमाभावः इति साध्याभावहेत्वभावयोर्व्याप्तिः व्यतिरेकव्याप्तिः इत्युच्यते। अन्वयव्याप्तौ हेतुर्व्याप्यः साध्यो व्यापकः। व्यतिरेकव्याप्तौ साध्याभावो व्याप्यः हेत्वभावो व्यापकः। वह्निव्याप्यधूमवानयं पर्वत इत्याकारकं व्याप्तिविशिष्टपक्षधर्मता-

ज्ञानं परामर्श इत्युच्यते। यत्र धूमस्तत्राग्निरिति व्याप्तिस्मरणानन्तरं वह्निव्याप्य-धूमवानयं पर्वत इति ज्ञानं यदुत्पद्यते तदेव लिङ्गपरामर्श इत्युच्यते। लिङ्गपरा-मर्श एवानुमानम्। अनुमितौ च लिङ्गपरामर्श एव चरमकारणम्।

काणादे वैशेषिके, आक्षपादे न्याये च परार्थानुमानप्रतिपादनविषये कश्चन पारिभाषिको भेदः यद्यप्यस्ति, तथाऽपि तात्पर्यं समानमेव। तत्र तावद्वैशेषिकदर्शने .... "अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम्, अस्येदं कार्यकारणसम्बन्धश्चावयवाद्भवति" इति द्वे सूत्रे[1] अनुमानप्रमाणं विषयीकृत्य दृश्येते। लिङ्गं हेतुः। "हेतुरपदेशो लिङ्गं प्रमाणं करणमित्यनर्थान्तरम्" इति सूत्रप्रामाण्यात्।[2] "लिङ्गदर्शनात् सञ्जायमानं (ज्ञानं) लैङ्गिकमित्यर्थः" इति विवरणं प्रशस्तपादेन कृतम्।[3] तदनुसारेण परार्थानुमान-मधिकृत्यैवमुक्तमिति फलति।

एवं च "पञ्चावयवेन वाक्येन स्वनिश्चितार्थप्रतिपादनं परार्थानुमानम्। पञ्चावयवेनैव वाक्येन संशयितविपर्यस्ताव्युत्पन्नानां परेषां स्वनिश्चितार्थ-प्रतिपादनं परार्थानुमानं विज्ञेयम्" इति भाष्यं[4] सङ्गच्छते। अयमभिप्रायः .... "स्वार्थानुमानेन योऽर्थः निश्चितः स एवार्थः पञ्चावयवसङ्घातरूपेण महा-वाक्येन प्रतिपाद्यते। तेन संशयवतः विपर्ययवतः, व्युत्पत्तिरहितस्य च प्रमाणितोऽर्थः अनुभवपर्यवसायी भवति" इति।

बौद्धादीनां मते द्वावेवावयवौ। तन्निराकरणार्थः "पञ्चावयवेनैव" इत्यत्रैवकरः। अयं च विषयः उत्तरत्र विचारयिष्यते।

अवयवाश्चैवं प्रतिपादिताः प्रशस्तपादेन[5] ..... "अवयवाः पुनः प्रतिज्ञापदेशनिदर्शनानुसन्धानप्रत्याम्नायाः" इति।

तत्र प्रतिपिपादयिषितेन धर्मेण विशिष्टस्य पक्षस्याभिधानं प्रतिज्ञेत्युच्यते। यथा पर्वते वह्निमत्वं धर्मः। तद्धर्मविशिष्टः पक्षः वर्तते। पर्वते वह्निमत्वं प्रतिपिपादयिषितम्। तथाच प्रशस्तपादेन विवृतम् .... "तत्रानुमेयोद्देशोऽविरोधी प्रतिज्ञा। प्रतिपिपादयिषितधर्मविशिष्टस्य धर्मिणोऽपदेशविषयमापादयितुमुद्देशमात्रं प्रतिज्ञा। यथा द्रव्यं वायुरिति" इति। अयं भावः ..... तेषु पञ्चस्ववयवेषु अनुमेयत्वेन प्रतिपादनीयत्वेन च स्वीकृतविषयस्याभिधानमात्रं प्रतिज्ञा। मात्रपदेन साधनस्य नाभिधानम्।

अविरोधिग्रहणात् प्रत्यक्षानुमानाभ्युपगतस्वशास्त्रस्ववचनविरोधिनो निरस्ता भवन्ति। तथाहि .... अग्नेरुष्णत्वं प्रत्यक्षप्रमाणेन सिद्धम्। तर्हि "अनुष्णोऽग्निः" इति प्रतिज्ञातुं न शक्यते। अनुमेयस्य प्रत्यक्षप्रमाणविरुद्धत्वात्।

तथा घनमम्बरमिति वाक्यं प्रतिज्ञा भवितुं नार्हति। अनुमानप्रमाणविरुद्धत्वात्। तद्यथा धर्मिग्राहकप्रमाणसिद्धेन नित्यत्वेन निरवयवत्वेन च निबिडावयवमम्बरमिति प्रतिज्ञा विरुध्यते।

ब्राह्मणकर्तृकस्य सुरापानस्यागमनिषिद्धत्वात् "ब्राह्मणेन सुरा पेया" इति प्रतिज्ञा आगमविरोधिनी। यथा ब्राह्मणेन क्षीरपानं कर्तव्यमिति विहितमागमेन। तेन च पापसाधनत्वाभावः प्रतिपादितः। तथा तेनैवागमेन सुरापानस्य पापसाधनत्वं प्रतिपादितमिति ब्राह्मणस्य सुरापानप्रतिज्ञायाः दृष्टान्तग्राहकप्रमाणविरोध इत्यर्थः।

वैशेषिकानां मते असतः सदुत्पद्यते। अतः "वैशेषिकस्य सत्कार्यमि"ति प्रतिज्ञा स्वशास्त्रं विरुन्धे।

एवमेव "शब्दो नार्थप्रत्यायकः" इति प्रतिज्ञा स्ववचनेन विरोधमिति। तद्यथा "यदि शब्दो नार्थजनकः तर्हि अर्थप्रतिपादनप्रयोजनकः शब्द-प्रयोगोऽनुपपन्नः"। "अथैतदर्थः शब्दस्यार्थप्रतिपादकत्वमि"ति प्रतिज्ञायाः स्ववचनविरोधः।

प्रतिज्ञा च साध्यभूतः। हेतोराश्रयः साध्यः। यस्मिन् कस्मिंश्चन-विषयेऽनुपन्यस्ते साध्याभावात्, साध्यप्रतिपादकोऽपदेशः न प्रवर्तते। अतः "साध्यः हेत्वाश्रयः" इति सिद्धम्। हेतोरप्रवृत्तौ न साध्यसिद्धिः, तस्मात् धर्मिग्राहकमानं दर्शयन्ती हेतोराश्रयो धर्मी संनिधाप्यते इत्याश्रयोपदर्शनद्वारा हेतुं प्रवर्तयन्ती प्रतिज्ञा साध्यसिद्धेरङ्गम्। अतएवोक्तं न्यायभाष्ये .... "असत्यां प्रतिज्ञायामनाश्रया हेत्वादयो न प्रवर्तेरन्नि"ति।

एतावता च पञ्चावयवान्यतमायाः प्रतिज्ञायाः साध्यसिद्धेरङ्गत्वं प्रतिपादितम्। "द्रव्यं वायुः" इति उदाहरणे वायौ द्रव्यत्वं साध्यम्। द्रव्यत्व-विशिष्टो वायुरिति पक्षः।

अपदेशः ..... लिङ्गवचनमपदेशः। प्रतिज्ञातविषयं साधयितुं साधनी-भूतो यो हेतुः तस्य वचनमेव अपदेश इत्युच्यते। तथाच "हेतुरपदेशो लिङ्गं प्रमाणं कारणमित्यनर्थान्तरम्" इति काणादं सूत्रम्।[8] तच्च प्रशस्तपादेन विवृतमित्थं[9] .... "यदनुमेयेन सहचरितं तत्सजातीये सर्वत्र सामान्येन प्रसिद्धं तद्विपरीते च सर्वस्मिन्नसदेव तल्लिङ्गमुक्तं, तस्य वचनमपदेशः" इति।

"द्रव्यं वायुः, क्रियावत्त्वाद्गुणवत्त्वाच्च" इत्यादिप्रयोगे द्रव्यं वायुरित्य-वान्तरवाक्यं प्रतिज्ञा। क्रियावत्त्वाद्गुणवत्वाच्चेति लिङ्गवचनमपदेशः। अत्र

गुणवत्वमनुमेये वायौ तत्समानजातीये (सपक्षे) सर्वस्मिंश्च पृथिव्यादिषु वर्तते। सपक्षैकदेशे मूर्तद्रव्यमात्रे क्रियावत्त्वं वर्तते। उभयमप्येतत् गुणवत्त्वं क्रियावत्त्वं च विपक्षे अद्रव्ये नास्ति - एवमुभयमपदेश इति सिद्धम्।

निदर्शनम् ..... निदर्शनं नाम दृष्टान्तः। साधर्म्येण वैधर्म्येण च। तत्र अनुमेयसामान्येन लिङ्गसामान्यस्यानुविधानदर्शनं साधर्म्यनिदर्शनम्।

"द्रव्यं वायुः, क्रियावत्वाद्गुणवत्वाच्च। यत् क्रियावत् तद् द्रव्यं दृष्टम् यथा शरः, यत् गुणवत् तद्द्रव्यं दृष्टम् यथाकाशादिः" इत्यत्र "यत् क्रियावत् तद्द्रव्यं दृष्टं यथा शरः यत् गुणवत् तद् द्रव्यं दृष्टं यथाकाशादिः" इत्यवान्तर-वाक्यं साधर्म्यनिदर्शनमुपपद्यते।

अनुमानविषये लिङ्गस्याभावदर्शनं वैधर्म्यनिदर्शनम्। साध्याभावेन साधनाभावनिदर्शकमित्यर्थः। तद्यथा "यदद्रव्यं तत्क्रियावन्न भवति यथा यदद्रव्यं सत्तेऽति। अत्र सत्तामद्रव्यं स्वीकृत्य तस्य क्रियावत्त्वाभावात् अद्रव्याणां क्रियावत्त्वाभावः वैधर्म्यनिदर्शनेनानुसन्धीयते। एवं च निदर्शनवाक्यं द्विविधं भवति, साधर्म्येण वैधर्म्येण च इति फलति। तेन महावाक्यस्यापि द्वैविध्य-मित्युत्तरत्र प्रतिपादयामः।

अनुसन्धानं .... निदर्शनेऽनुमेयसामान्येन सह दृष्टस्य लिङ्गसामान्य-स्यानुमेयेऽन्वानयनमनुसन्धानम्। दृष्टान्ते साध्याविनाभूतत्वेन दर्शितं लिङ्गं पक्षे अनुसन्धीयतेऽनेनेत्यनुसन्धानम्। "द्रव्यं वायुः। क्रियावत्वाद्गुणवत्त्वाच्च। यत्क्रियावत् तद्द्रव्यं यथा शरः, यद्गुणवत् तद्द्रव्यं यथाकाशादिः। तथा च वायुः क्रियावान् गुणवांश्च" इति प्रयोगे तथाचेत्याद्यवान्तरवाक्यमनुसन्धान-

मित्युच्यते। तथाहि .... प्रतिज्ञाहेतुवाक्याभ्यां साध्यप्रतिपादने लिङ्गस्य अन्वयव्यतिरेकरूपा, पक्षधर्मतारूपा च शक्तिः नावगतेति अनुपलब्धशक्तिकं लिङ्गं दृष्टान्ते साध्यधर्मसामान्येन वचनेनानुसन्धीयते तदनुसन्धानम्।

इदमत्र तात्पर्यम्.... परार्थानुमान एव पञ्चावयववाक्यानामुपयोगात् यथा यथा परजिज्ञासोदयः तथा तथा वाक्यानां प्रयोग आवश्यकः। एवं च यथा साध्ये उक्ते कुत इति हेत्वाकाङ्क्षायां हेतुप्रयोगः। हेतुवचनेन च हेतुस्वरूपमात्रबोधो न पक्षधर्मताबोधः, एकस्य शब्दस्योभयार्थावाचकत्वात्। हेतुज्ञाने कथमस्य हेतुत्वमिति सामर्थ्यजिज्ञासायां साध्यप्रतीतेरविनाभावप्रतीतिनान्तरीयकत्वात् व्याप्तिवचनेनाविनाभावे कथितेऽवधृतसामर्थ्यस्य हेतोः पक्षे सम्भव इत्युदाहरणप्रयोगः। तदनन्तरं च पक्षधर्मताज्ञानार्थमनुसन्धानमुपगन्तव्यमिति। प्रत्याम्नायः प्रतिज्ञायाः पुनर्वचनं प्रत्याम्नायः। "द्रव्यं वायुः, क्रियावत्त्वाद्गुणवत्त्वाच्च, यत् क्रियावत् दृष्टं तद् द्रव्यं यथा शरः, यद् गुणवत् दृष्टं तद् द्रव्यं यथाकाशादिः, तथा चायं, तस्मात्तथा" इति महावाक्यस्य प्रयोगे, "तस्मात्तथा" इति अवान्तरवाक्यं प्रत्याम्नाय इत्यभिधीयते। अनेन, प्रतिज्ञया पक्षेऽनुमेयत्वेनोद्दिष्टे, साधर्म्ये अनिश्चिते च तस्यैव धर्मिणि परेषां निश्चयाय प्रत्यावृत्याभिधानं सम्पद्यते इति फलति।

एवं च प्रतिज्ञामात्रेण परेषां साध्यनिश्चयाभावेऽपि क्रमेण हेत्वादिभिः त्रिभिः तन्निश्चयसामर्थ्ये लब्धे अन्ततः प्रत्याम्नायवाक्येन साध्यनिश्चयः सम्पूर्णो भवतीत्यवधेयम्।

प्रत्याम्नायस्यावश्यकता विवृतेत्थं प्रशस्तपादेन[10] .... "न ह्येतस्मिन्नसति परेषामवयवानां समस्तानां व्यस्तानां वा तदर्थवाचकत्वमस्ति। गम्यमाना-

र्थत्वादिति चेन्न, अतिप्रसङ्गात्। तथाहि - प्रतिज्ञानन्तरं हेतुमात्राभिधानं कर्तव्यम्, विदुषामन्वयव्यतिरेकस्मरणात् तदर्थावगतिर्भविष्यतीति, तस्मादत्रैवार्थपरिसमाप्तिः कथम् ? "अनित्यः शब्दः" इत्यनेनानिश्चितानित्यत्वमात्रविशिष्टः शब्दः कथ्यते। प्रयत्नानन्तरीयकत्वादित्यनेनानित्यत्वसाधनधर्ममात्रमभिधीयते। इह यत् प्रयत्नानन्तरीयकं तदनित्यं दृष्टं यथा आकाश इत्यनेन साध्याभावेन साधनस्यासत्त्वं प्रदर्श्यते। तथा च प्रयत्नानन्तरीयकः शब्दो दृष्टो न च तथा आकाशवदप्रयत्नानन्तरीयकः शब्द इत्यन्वयव्यतिरेकाभ्यां दृष्टसामर्थ्यस्य साधनसामान्यस्य शब्देऽनुसन्धानं गम्यते। "तस्मादनित्यः शब्दः इत्यनेनानित्य एव इति प्रतिपिपादयिषिता अर्थपरिसमाप्तिर्गम्यते। तस्मात् पञ्चावयवेनैव वाक्येन परेषां स्वनिश्चितार्थप्रतिपादनं क्रियते इत्येतत्परार्थानुमानं सिद्धमि"ति।

ग्रन्थेनचैतावता पञ्चानामवयववाक्यानां प्रयोगापेक्षा दर्शिता। एवं च "द्रव्यं वायुः, क्रियावत्त्वाद्गुणवत्त्वाच्च, यत् क्रियावत् तद्द्रव्यं दृष्टं, यथा शरः, यद्गुणवत् तद्द्रव्यं दृष्टं यथा आकाशादिः, तथा चायं वायुः, तस्मात्तथा" इत्यस्य महावाक्यस्य अवान्तरवाक्यरूपाः अवयवाः पञ्च सन्ति, येषां परस्पराकाङ्क्षावशात् एकवाक्यतया महावाक्यार्थः परार्थानुमानजनको जायते इति फलति।

अक्षपादेन तु पञ्चावायवा भङ्ग्यन्तरेणोक्ताः, तेषां सङ्घातस्य च न्याय इत्याख्या कृता। पञ्चानामवयवानामेकवाक्यत्वं परार्थानुमानजनकत्वं चोभयत्र समानम्। तदिदं प्रतिपाद्यते। तथा हि .....

"प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः" इति सूत्रेण[11] न्यायवाक्यस्य प्रतिज्ञादयः पञ्चैवावयवा (अन्यूनातिरिक्तम्) इति सूचितम्। अवयवानां संख्या-विषये बहवो मतभेदाः सन्तीति वृद्धाः।[12] तन्निराकरणार्थमेव अक्षपादस्याय-मभिसन्धिः। तथाहि .... "उदाहरणनिगमने द्वावेवावयवौ इति बौद्धाः। प्रतिपक्षाहेतूदाहरणानि, उदाहरणोपनयनिगमनानि वा त्रीण्येवावयवा इति मीमांसकाः। केषाञ्चन नैयायिकानां, जैनानां, भद्रबाहोश्च मते प्रतिज्ञा-प्रतिज्ञाविभक्ति-हेतु-हेतुविभक्ति-विपक्ष-विपक्षप्रतिषेध-दृष्टान्त-शङ्का-शङ्काप्रतिषेध-निगमनाख्यानि दशावयवाः। केचन नैयायिकास्तु जिज्ञासा-संशय-शक्यप्राप्ति-प्रयोजन-संशयव्युदासाख्यपञ्चावयवसहितप्रतिज्ञाद्य-वयवसमूह एव (दशावयवसमुदायः) न्याय इति कथयन्ति। एतन्नानामत-निराकरणमेवैतत्सूत्रप्रयोजनम्" इति।

परार्थप्रतिपादका ये शब्दाः सम्भूयेतरेतप्रत्यायितेनार्थेनार्थवन्तो महावाक्याङ्गतामुपयान्ति तेऽवयवाः। यत एते संहत्य महावाक्यार्थं निष्पा-दयन्तोऽवयवा इत्युच्यते। सूत्रेऽवयवः इत्यस्य न्यायमहावाक्यस्य एकदेश-भूतानि अवान्तरवाक्यानि इत्यर्थः। तेन पञ्चानामवान्तरवाक्यरूपाणा-मवयवानामेकवाक्यता सिद्धा।

तत्र "साध्यनिर्देशः प्रतिज्ञा" इति आक्षपादं सूत्रं प्रतिज्ञां लक्षयति।[13] साध्यधर्मविशिष्टस्य धर्मिणो वचनं प्रतिज्ञेति सूत्रार्थः। यस्मिन् धर्मिणि यो धर्मः साधनीयः, तेन धर्मेण विशिष्टस्य धर्मिणः अभिधानमेव प्रतिज्ञा। यथा "अनित्यः शब्द" इति प्रतिज्ञा। अत्र धर्मिणि शब्देऽनित्यत्वरूपधर्मः साधनीयः। अयमेव साध्यनिर्देशः।

प्रतिज्ञावाक्योक्तसाध्यधर्मस्य साधको यो भवति स एव हेतुः। "उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः" इति सूत्रम्।[14] साध्ये, उदाहरणे च साध्यधर्मस्य साधनं यदस्ति स एव हेतुरित्यर्थः। एतेन उदाहरणवाक्यस्य हेतुवाक्योत्तरमेव पठनीयत्वेऽपि, धर्मं साध्ये, उदाहरणे च प्रतिसन्धाय तदानीमेव हेतुवचनं कर्तव्यमित्युक्तं भवति। यथा "अनित्यः शब्दः उत्पत्तिधर्मकत्वात्" इति प्रयोगे उत्पत्तिधर्मकत्वादिति पञ्चम्यन्तं हेतुवचनम्। यतो हि वक्ष्यमाणे "उत्पत्तिधर्मकमनित्यं दृष्टं यथा घटः" इत्युदाहरणेऽपि, शब्दे साधनीयधर्मभूतस्य अनित्यत्वस्य सत्वात्। एवं च साध्योदाहरणयोरुभयोरपि धर्मभूतस्यानित्यत्वस्य साधनमुत्पत्तिधर्मकत्वं, तस्मात् "उत्पत्तिधर्मकत्वादिति हेतुवचनम्" इति स्पष्टम्।

किञ्च यथा उदाहरणसाधर्म्यात् हेतुर्भवति तथा उदाहरणवैधर्म्यादपि हेतुर्भवतीत्युक्तमक्षपादेन "तथा वैधर्म्यात्" इति सूत्रेण।[15] यथा साध्योदाहरणसाधर्म्यात्साध्यसाधनं हेतुः तथा साध्योदाहरणवैधर्म्यादपि साध्यसाधनं हेतुरित्यर्थः। तथाहि ... "अनित्यः शब्दः उत्पत्तिधर्मकत्वात्, अनुत्पत्तिधर्मकं नित्यं, यथा आत्मादिद्रव्यम्" इति प्रयोगे साध्यगतधर्मः अनित्यत्वम्। उदाहरणभूतात्मगतधर्मश्च नित्यत्वम्। तथाच साध्योदाहरणगतं वैधर्म्यं (नित्यत्वानित्यत्वयोः) स्पष्टम्। "उत्पत्तिधर्मकत्वात्" इति हेतुश्चात्र साध्योदाहरणगतवैधर्म्यात् साध्यभूतानित्यत्वं साधयतीति तस्य हेतुता।

उदाहरणं नाम दृष्टान्त इति सामान्येन वक्तुं शक्यते। धर्मधर्मिणोः सामानाधिकरण्यं सप्रमाणं निरूपयितुं तादृशधर्मिणोरभिधानम् उदाहरण-

मित्युच्यते। उक्तं च "साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम्"[16] इति। उदाह्रियते साध्यसाधनभाव अनेनेत्युदाहरणम्। साध्येन साधर्म्यं समान-धर्मता। साध्यसाधर्म्यात् कारणात् तद्धर्मभावी दृष्टान्त इत्यर्थः। तस्य साध्यस्य धर्मः तद्धर्मः। अत्र तच्छब्देन "अनित्यः शब्द" इतिरूपः धर्मविशिष्टो धर्मी गृह्यते, न तु "शब्दस्यानित्यत्वम्" इतिरूपो धर्मिविशिष्टो धर्मः, "तद्धर्मभावी" इत्यत्र पृथक् धर्मवचनात्। तस्य धर्मस्तद्धर्मः, तस्य भावः तद्धर्मभावः यस्मिन् दृष्टान्ते वर्तते स दृष्टान्तः साध्यसाधर्म्यात्तद्धर्मभावी भवति, स चोदाहरण-मिष्यते। "अनित्यः शब्दः" इत्याद्यनुमाने यदुत्पद्यते तदुत्पत्तिधर्मकम्। तच्च उत्पद्य नश्यतीत्यनित्यम्। एवमुत्पत्तिधर्मकत्वं साधनमनित्यत्वं साध्यम्। सोऽयमेकस्मिन् द्वयोर्धर्मयोः साध्यसाधनभावतः साधर्म्याद्व्यवस्थितः उपलभ्यते। तं दृष्टान्त उपलभमानः शब्देऽप्यनुमिनोति, शब्दः उत्पत्तिधर्मक-त्वादनित्यः घटादिवदिति।

साध्योदाहरणयोस्साधर्म्यमनुसृत्य यथा उदाहरणं प्रवृत्तं तथा साध्यो-दाहरणयोर्वैधर्म्यमनुसृत्याऽपि उदाहरणमपरं वर्तते। "तद्विपर्ययाद्वा विपरीतम्" इति सूत्रम्।[17] तच्छब्देन साध्यं गृह्यते। साध्यवैधर्म्यादतद्धर्मभावी दृष्टान्त उदाहरणमिति सूत्रार्थः। तथाहि ... "अनित्यः शब्दः, उत्पत्तिधर्मकत्वात्, अनुत्पत्तिधर्मकं नित्यमात्मादि" इति प्रयोगे साध्यधर्मोऽनित्यत्वम्। दृष्टान्ते आत्मनि साध्यवैधर्म्यं नित्यत्वमस्ति, अनुत्पत्तिधर्मकत्वं च। एवं साध्य-वैधर्म्यादनुत्पत्तिधर्मकत्वात् अतद्धर्मभावी दृष्टान्तः। अत्रात्मनि दृष्टान्ते उत्पत्ति-धर्मकत्वस्य साध्यधर्मस्याभावत् अनित्यत्वं न भवतीति उपलभमानः शब्दे विपर्ययमनुमिनोति .... उत्पत्तिधर्मकत्वस्याभावादनित्यः शब्द इति।

अयमत्र सारः .... साधर्म्योक्तस्य हेतोः साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम्। वैधर्म्योक्तस्य हेतोः साध्यवैधर्म्यादतद्धर्मभावी दृष्टान्त उदाहरणम्। पूर्वस्मिन् दृष्टान्ते अनुमाता यौ तौ धर्मौ साध्यसाधनभूतौ पश्यति साध्येऽपि तयोः साध्यसाधनभावमनुमिनोति। उत्तरस्मिन् दृष्टान्ते तयोर्धर्मयोरे-कस्याभावादितरस्याभावं पश्यति ततश्च तयोरेकस्याभावादितरस्याभावं साध्येऽनुमिनोति।

अतः उदाहरणस्य साधर्म्यवैधर्म्याभ्यां द्विविधं न्यायवाक्यं सिद्धम्। तथाहि .... "अनित्यः शब्दः, उत्पत्तिधर्मकत्वात्, यद्यदुत्पत्तिधर्मकं तत्तदनित्यं दृष्टं, यथा घटः, तथा चायं, तस्मात्तथा" इत्येकं साधर्म्यमनुसृत्य प्रवृत्तं न्यायमहावाक्यम्। "अनित्यः शब्दः, उत्पत्तिधर्मकत्वात् अनुत्पत्तिधर्मकं नित्यं दृष्टं यथा आत्मा, अयं न तथा, तस्मात्तथा" इति वैधर्म्यमनुसृत्य प्रवृत्तं द्वितीयं च। प्रथमे तावदनुमानेऽन्वयव्याप्तिः, साधर्म्यविशिष्टोदाहरणस्य स्वीकारात्। द्वितीये त्वनुमाने व्यतिरेकव्याप्तिः वैधर्म्यविशिष्टोदाहरणस्य स्वीकारात्।

पञ्चावयवविशिष्टे महावाक्ये चतुर्थोऽवयवः उपनय इत्युच्यते। उपनयो नाम उपसंहार इति सामान्यार्थः। साध्यहेतूदाहरणवचनानन्तरं साध्यस्य साधर्म्यं वैधर्म्यं च पुरस्कृत्य, "तथाचायम्" इति, "अयं न तथा" इति च यथाक्रमम्
6 उपसंहारः क्रियते। तदुक्तम्[18] ..... "उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्योपनयः" इति। उदाहरणापेक्षः साध्यस्योपसंहारः उपनय इति सामान्यलक्षणम्। तत्र उदाहरणं यदि साध्यसाधर्म्ययुक्तं तर्हि "तथा चायम्" इत्युपनयः, उदाहरणं च यदि वैधर्म्ययुक्तं तर्हि "न तथाचायम्" इत्युपनयः।

इदं फलति .... यथा साध्यसाधर्म्ययुक्ते उदाहरणे घटादिद्रव्यम् उत्पत्तिधर्मकम् अनित्यं दृष्टं, तथा शब्देऽपि उत्पत्तिधर्मकत्वं दृष्टम् इति साध्यस्य उत्पत्तिधर्मकत्वमुपसंह्रियते। एवम् "अनित्यः शब्दः, उत्पत्तिधर्मकत्वात् अनुत्पत्तिधर्मकं नित्यं दृष्टं यथा आत्मा तथा नायम्" इति साध्यवैधर्म्ययुक्ते उदाहरणे आत्मादिद्रव्यमनुत्पत्तिधर्मकं नित्यं दृष्टं, न च तथा शब्दः इति अनुत्पत्तिधर्मकत्वस्योपसंहारप्रतिषेधेनोत्पत्तिधर्मकत्वमुपसंह्रियते। तदिदमुपसंहारद्वैतमुदाहरणद्वैताद्भवति। अत एव सूत्रे उदाहरणापेक्ष इति दलम्।

न्यायवाक्यस्य पञ्चमोऽवयवः निगमनमित्युच्यते। निगम्यन्ते प्रतिज्ञाहेतूदाहरणोपनया अनेनैकत्रेति निगमनम्। तदुक्तम्[19] ...... हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम् इति। प्रतिज्ञाहेतूदाहरणोपनयानां सम्बन्धः एकत्रानेनानीयते इति निगमनमित्यस्य सार्थकं नाम। "अनित्यः शब्दः उत्पत्तिधर्मकत्वात् यदुत्पत्तिधर्मकं तद् दृष्टमनित्यं, यथा घटः, तथा चायं, तस्मात्तथा" इत्यन्वयानुमानवाक्ये, "अनित्यः शब्दः उत्पत्तिधर्मकत्वात्, यदनुत्पत्तिधर्मकं तन्नित्यं दृष्टं, यथाऽऽत्मा, अयं न तथा, तस्मात्तथा" इति व्यतिरेकानुमाने च "तस्मात्तथा" इत्यवान्तरवाक्यं निगमनमित्युच्यते।

अयं चात्र विशेषः .... अन्वयव्यतिरेकाभ्याम् उदाहरणस्योपनयस्य च द्वैतेऽपि न निगमनस्य द्वैतम्। तस्मात्तथा इत्यस्य च उक्तहेतूदाहरणोपनयैः "अनित्यः शब्दः" इति सङ्गच्छते इत्यर्थः। अत एव सूत्रे प्रतिज्ञायाः पुनर्वचनमित्युक्तं सूत्रकारेण।

एतावता च पञ्चावान्तरवाक्यसङ्घातरूपं न्यायमहावाक्यं द्विविधं सम्पन्नम्.. "अनित्यः शब्दः उत्पत्तिधर्मकत्वात्, यदुत्पत्तिधर्मकं तदनित्यं दृष्टं, यथा घटः, तथा चायम्, तस्मात्तथा" इत्यन्वयेन परार्थानुमानजनकं न्यायमहा-वाक्यम्।

"अनित्यः शब्दः उत्पत्तिधर्मकत्वात्, यदनुत्पत्तिधर्मकं तन्नित्यं दृष्टं, यथाऽऽत्मा। तथा च नायम्, तस्मात्तथा" इति व्यतिरेकेण परार्थानुमानजनकं न्यायमहावाक्यम्।

ततश्चायमत्र संग्रहः ....

१. प्रतिज्ञा - साध्यस्य धर्मस्य धर्मिणा सम्बन्धोपपादनम्।

२. हेतुः - उदाहरणेन समानस्य विपरीतस्य वा साध्यस्य धर्मस्य साधकवचनम्।

३. उदाहरणम् - धर्मयोरेकत्र साध्यसाधनभावप्रदर्शनम्।

४. उपनयः - साधनभूतस्य धर्मस्य साध्येन धर्मेण सामानाधिकरण्योपपादनम्।

५. निगमनम् - उदाहरणस्थयोर्धर्मयोः साध्यसाधनभावोपपत्तौ साध्ये विपरीतप्रसङ्गप्रतिषेधः।

पञ्चानाञ्चावयवानाम् इतरेतराभिसम्बन्धः प्राधान्यं चेत्थं वक्तुं शक्यते - हेत्वादीनां चतुर्णामवयवानामाश्रयीभूता प्रतिज्ञा। प्रतिज्ञां विना हेत्वादयो न प्रवर्तेरन्, आश्रयाभावात्। हेतावसति च व्याप्यताव्याप्तिः प्रदर्शयितुं न शक्यते। उदाहरणे साध्ये च हेतोरेवोपसंहारः, हेत्वपदेशादेव प्रतिज्ञायाः पुनर्वचनं निगमनं च स्यादिति हेतुर्मुख्यः। निगमनाकाङ्क्षितत्वं च हेतोः स्पष्टमेव। उदाहरणगत-

साधर्म्यवैधर्म्ये पुरस्कृत्यैव साध्यसाधनभूतो हेतुः प्रवर्तते। उपसंहारश्च प्रतिज्ञोदाहरणयोः साधर्म्यं पुरस्कृत्यैव प्रवर्तते। एवं हेतूपसंहारयोः हेतुभूत-मुदाहरणम्। उपनयं चान्तरेण साध्येऽनुपसंहृतः साधको धर्मः अर्थं न साधये-दिति उपनयः आवश्यकः। निगमनाभावे च प्रतिज्ञादीनामेकार्थत्वप्रतिपादनं न स्यात्। एवं च पञ्चाप्यवयवाः परस्पराकाङ्क्षासहिताः। अत एव एतेषामेक-वाक्यता सङ्गच्छते। सैव महावाक्यार्थीभूतपरार्थानुमानसम्पादयित्री भवति।

एवञ्च साधर्म्यवैधर्म्यानुसारेण पञ्चावयवद्वारकं परार्थानुमानरूपं महावाक्यमेकं सिध्यतीति यथार्थं प्रतिपादितम्।

इमे पञ्चावयवाश्च यथोक्तक्रमेणैव प्रयोक्तव्याः तथैवार्थप्रतीते-रसम्भवात्, औचित्याच्च। तथाहि .... उक्तं च न्यायमञ्जर्याम्[20] .... "प्रतिज्ञां विना निराश्रयो हेतुर्भवेदिति सा पूर्वं प्रयोक्तव्या अनित्यः शब्दः" इति, ततो हेतुं परो जिज्ञासते इति हेतुवचनमुच्चार्यते कृतकत्वादिति हेतौ श्रुते क्वास्य व्याप्तिरवधृतेति दर्शयितुमुदाहरणमुच्यते, "यत् कृतकं तदनित्यं दृष्टं यथा घट" इति, एवमुक्ते किमीदृशी निर्ज्ञातशक्तिरेष हेतुः साध्यधर्मिणि भवेन्नवेत्य-सिद्धताशङ्कामपाकर्तुमुपनयः प्रसज्यते, ततोऽमुना क्रमेण तथाऽपि साध्य-प्रतीतिर्भव त्विति सर्वावयवानेकात्र साध्येऽर्थे समर्थयितुं निगमनमभिधीयते, अन्यतममवयवमन्तरेण सर्वमिदमननुषक्तार्थवाक्यं स्यादिति पञ्चावयवमेव यथोपदिष्टक्रमकं वाक्यं प्रयोक्तव्यम् इति।

चिन्तामणिरपि अमुमेवार्थं समर्थयति।[21] तथाहि .... "साध्याभिधानं विना न हेतोराकाङ्क्षा, न वाऽन्वयबोधकत्वम् इति प्रतिज्ञा साधनाङ्गम्।

साध्यनिर्देशानन्तरं कुत इत्याकाङ्क्षायां साधनताव्यञ्जकविभक्तिमल्लिङ्ग-वचनमेवोचितम् अन्यथाऽनाकाङ्क्षाभिधाने निग्रहापत्तेः, लोके तथैवाकाङ्क्षा-निवृत्तिरपि प्रतिज्ञानन्तरं हेतूपन्यासः। हेतावुक्ते कथमस्य गमकत्वमित्या - काङ्क्षायां व्याप्तिपक्षधर्मतयोः प्रदर्शनप्राप्तौ व्याप्तेः प्राथम्यात् तत्प्रदर्शनायो-दाहरणम्। उदाहरणानन्तरं भवतु व्याप्तिस्तथाऽपि व्याप्तं किं पक्षे वर्तते नवेत्या-काङ्क्षायां व्याप्तस्य पक्षधर्मत्वप्रदर्शनायोपनयः। उपनयानन्तरं निगमनं, तच्चानु-मितिहेतुलिङ्गपरामर्शप्रयोजकशाब्दज्ञानकारणव्याप्तिपक्षताधीप्रयुक्तसाध्य-धीजनकं वाक्यम्। न च व्याप्तिपक्षधर्मतायाश्चतुर्भिरेवावयवैः पर्याप्तेः किं तेनेति वाच्यम्। अबाधितत्वासत्प्रतिपक्षत्वयोरलाभे चतुर्णामिप्यपर्यवसानात्" इति।

एवं प्रशस्तपादभाष्यानुसारेण प्रतिज्ञापदेशनिदर्शनानुसन्धानप्रत्या-म्नायानां परस्पराकाङ्क्षावशात्, एकवाक्यतायां च आकाङ्क्षाया एव मुख्य-कारणत्वात्, "अवयवा" इति संज्ञाकरणसामर्थ्याच्च परार्थानुमानजनक-महावाक्यगतावान्तरवाक्यानामेकवाक्यता सिद्धा। न्यायभाष्य-न्यायमञ्जरी-चिन्तामण्यादि ग्रन्था अपि उक्तार्थे संवदन्ति।

व्याकरणशास्त्रे इव न्यायवैशेषिकयोरुभयोरपि सूत्राणां वाक्यकल्पानां परस्परं वाक्यैकवाक्यतया महावाक्यार्थः बोध्यः।





# षष्ठपरिच्छेदः

## (अलङ्कारशास्त्रम्)

अथ आलङ्कारिकरीत्या महावाक्यविचारः आरभ्यते। अलङ्कारशास्त्रे रघुवंशादिकाव्यानां, रामायणादीतिहासानां च महावाक्यत्वं प्रतिपादितम्। तथैव कुलकादयः साङ्केतिकश्लोकसमुदायाः आक्षेपार्थान्तरन्यासव्याजस्तुत्याद्यलङ्काराश्च महावाक्यार्थं पुरस्कृत्योपवर्णिताः। तदत्र संग्रहेण प्रतिपाद्यते। तथाहि - रघुवंशे अतीवप्रसिद्धे आद्यसर्गस्थे "सोऽहमाजन्मशुद्धानाम्" इत्यारभ्य "रघूणामन्वयं वक्ष्ये" इत्यन्ते कुलके "सोऽहं रघूणामन्वयं वक्ष्ये" इति महावाक्यपर्यवसाय्येव इतरद्वाक्यजातं सम्भवतीति स्पष्टमेव। काव्यालङ्कारसङ्ग्रहे उद्भटेन आक्षेपालङ्कारः एवं लक्षितः[1] .... "प्रतिषेध इवोक्तस्य यो विशेषविधित्सया। आक्षेप इति तं सन्तः शंसन्ति कवयः सदा" इति। यत्र शब्दप्रयोगे विधिवाक्यस्य, निषेध इवाचरता वाक्येन संस्कारः स आक्षोपालङ्कारः। तथाच विधीयमानार्थः प्रतिषिध्यत इव भाति। न तु प्रतिषिध्यते। अर्थात् निषेधबोधकवाक्यस्यावान्तरवाक्यत्वम्। महावाक्यार्थस्तु विधिरेव। प्रतिषेधस्य अवान्तरवाक्यार्थत्वेन तत्र वाक्यापरिसमाप्तेः, "विवक्षिते महावाक्ये नावान्तरवाक्यस्य प्रामाण्यम्" इति नियमाच्च न तस्य तत्त्वेन ग्रहणम्। किन्तु विधेरेव प्रतिषेधविशिष्टस्य। अयं सन्दर्भः यत्र वाग्विन्यासे दृश्यते तत्राक्षेपालङ्कारः। इदमत्रोदाहरणम्[2]..

अहो स्मरस्य माहात्म्यं यद्रुदेऽपि दशेदृशी।
इयदास्तां समुद्राम्भः कुम्भैर्मनि तु के वयम्॥ इति।

श्लोकोऽयमेकं महावाक्यम्। तत्र प्रथमः पादः प्रधानवाक्यम्, विधीयमानत्वात्। द्वितीयस्तु निषेधरूपमवान्तरवाक्यम्। श्लोकेऽस्मिन् मन्मथस्य माहात्म्यं रुद्रदशासंस्पर्शेन प्रतिपाद्यते। इयदास्तामिति निषेधस्य श्रवणात् द्वितीयवाक्यस्य निषेधार्थकत्वम्। अत्र पद्ये स्मरमाहात्म्यकृतावस्थाविशेषाणामानन्त्यं विवक्षितम्। "यद्रुदेऽपि दशेदृशी" इति सामान्यत्वेन प्रतिपादितम्। न तु विशेषपरतया। तस्माद्विशेषेण मन्मथमाहात्म्यावस्थाः प्रतिपिपादयिषुः कविः तासामानन्त्येन अभिधाननिषेध इव वक्ति इयदास्तामित्यादि, न त्वयं निषेधः, विवक्षितार्थविरोधात्। तेन द्वितीयवाक्यस्यावान्तरवाक्यत्वम्। अत एव च तस्य न प्रामाण्यम्। अत्र श्लोके यथा समुद्राम्भसः मातुमशक्यत्वं, तथैव मन्मथमाहात्म्यानामपीति मन्मथमाहात्म्यविशेषाणामुत्कर्षयितुमिष्टानां महावाक्यार्थत्वम्। अतस्तदभिधाननिषेधस्यावान्तरवाक्यार्थता। एतच्च स्पष्टं लघुवृत्तौ प्रतीहारेन्दुरचितायाम्। तदेतत्सर्वं शाबरभाष्यमनुसृत्यैवोपवर्णितं च।

अर्थान्तरन्यासालङ्कारेऽपि समर्थकवाक्यस्य समर्थ्यवाक्येन सह वाक्यैकवाक्यतया महावाक्यार्थबोधः। सामान्यतः समर्थवाक्यगताः हीत्यादिशब्दाः समर्थ्यसमर्थकभावस्य द्योतका भवन्ति। अर्थान्तरन्यासालङ्कारलक्षणं चौद्भटे [3] .....

समर्थकस्य पूर्वं यद्वचोऽन्यस्य पृष्ठतः।
विपर्ययेण वा यत्स्याद्धिशब्दोक्त्यन्यथापि वा॥
ज्ञेयः सोऽर्थान्तरन्यासः॥ इति।

यत्र वाक्यविन्यासे समर्थ्यसमर्थकभावः तत्रार्थान्तरन्यासः। इदं चोदाहरणम् [4]...

तन्नास्ति यन्न कुरुते लोके ह्युत्पन्नकार्यिकः।
एष शर्वोऽपि भगवान् वटूभूय स्म वर्तते॥ इति।

अत्र तावत् प्रथमः पादः समर्थकवाक्यभूतः। द्वितीयश्च समर्थ्यः। यतो भगवान् शर्वोऽपि वटूभूय वर्तते, लोके हि उत्पन्नकार्यिको जनः सर्वमपि कार्यं कुरुते, तस्मात् शर्वः समर्थनीयः इति विशेषसमर्थनरूपोऽर्थान्तरन्यासः। श्लोकोऽयमेकं महावाक्यम्।

इयमेव रीतिः व्याजस्तुत्यलङ्कारविषयेऽपि। तत्र हि निन्दया स्तुतिर्गम्यते। शबरस्वामी प्राह [5]..... "न हि निन्दा निद्यं निन्दितुं प्रवर्तते, किन्तु स्तुत्यं स्तोतुम्" इति। निन्दाव्याजेन स्तुतिः व्याजस्तुतिः। निन्दावाक्यार्थस्य च अविवक्षितत्वात् अवान्तरवाक्यार्थत्वम्। अत्रोदाहरणम् [6]....

धिगनन्योपमामेतां तावकीं रूपसम्पदम्।
त्रैलोक्येऽप्यनुरूपो यद्वरस्तव न लभ्यते॥ इति।

अत्र त्रैलोक्येऽपि तवानुरूपो वरो न लभ्य इति अनन्योपमां तव रूपसम्पदं धिक् इति निन्दा व्यज्यमानाऽपि महावाक्यार्थस्य लोकोत्तररूपप्रतिपादनपर्यवसितत्वात् व्याजस्तुतिरलङ्कारः। अतः "अनन्योपमां तावकीं रूपसम्पदं धिक्" इति अवान्तरवाक्यम्। निन्दाव्याजेन रूपोत्कर्षोऽत्र स्तूयते।

अनुग्राह्यानुग्राहकसङ्करे च अलङ्कारयोः परस्परमुपकार्योपकारकभावस्य सत्त्वात् अङ्गाङ्गिभावः। तेनानुग्राह्यानुहग्राहकवाक्ययोः परस्परमेकवाक्यता, तया महावाक्यार्थबोधश्च जायते। अङ्गाङ्गिभावेनैकवाक्यता च पूर्वमीमांसापरिच्छेदे विचारितैव। अत्रोदाहरणम् [7]....

हरेणेव स्मरव्याधस्त्वयाऽनङ्गीकृतोऽपि सन्।

त्वद्वपुः क्षणमप्येष धाष्ट्यादिव न मुञ्चति ।। इति।

अत्र धाष्ट्यादिव न मुञ्चतीत्युत्प्रेक्षा ("उत्प्रेक्षा व्यज्यते शब्दैरिव-शब्दोऽपि तादृशः" इति दण्डी) असावुत्प्रेक्षा "हरेणेव स्मरव्याधस्त्वयानङ्गी-कृतोऽपि सन्" इत्युपमाप्रतिभयोत्थापितश्लेषवशेन स्वरूपं प्रतिपद्यते। अनङ्गी-कृतः अशरीरत्वं प्रापितः, अनूरीकृतश्च। अनूरीकृतः क्षणमपि न मुञ्चति। तत्र धाष्ट्र्यहेतुतया ऊहितुं शक्यते। तेन श्लेषवशेनात्रोत्प्रेक्षा आसादितस्वभावा। अतोऽयमनुग्राह्यानुग्राहकसङ्करः। एवमेवान्येष्वपि केषुचनालङ्कारेषु महा-वाक्यार्थबोध ऊहनीयः।

रामायणमहाभारतादिषु महाप्रबन्धेष्वपि एकमेव रसमङ्गिनं स्वीकृत्य काव्यबन्धः कृत इति स्फुटमेव। तस्य अङ्गिभूतस्य रसस्य अङ्गत्वेन रसान्त-राणि प्रतिपादितानि भवन्ति।

ध्वन्यालोके च द्वितीयोद्योते आनन्दवर्धनेनालङ्काराः रसस्याङ्गभूता इति प्रतिपादितम्। तथाहि तेनैवोक्तम्..... "स सर्वोऽपि यदि समीक्ष्य विनिवेश्यते तदलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेरङ्गिनः सर्वस्यैव चारुत्वहेतुर्निष्पद्यते" इति। तथाचाङ्गिभूतरसप्रतिपादकवाक्यानाम् अङ्गभूतालङ्कारवाक्यानां चाङ्गाङ्गि-भावेन वाक्यैकवाक्यता। तेन च महावाक्यसिद्धिः।

उपक्रमोपसंहाराभ्यां च प्राधान्यव्यवस्था क्रियते। तथा च वाल्मीकिना रामायणे करुणः अङ्गितया निर्व्यूढः, एकप्रयोजनार्थत्वात्। अतः काव्यगत-

वाक्यानामेकवाक्यता, तथा च काव्यस्य महावाक्यत्वम्। ध्वन्यालोके चतुर्थोद्योते आनन्दवर्धनश्चैवं वक्ति [9].... "रसभावतदाभासरूपे हि व्यङ्ग्ये तदुव्यञ्जकेषु च यथानिर्दिष्टेषु वर्णपदवाक्यरचना प्रबन्धेष्ववहितमनसः कवेः सर्वमपूर्वं काव्यं सम्पद्यते। ...... प्रबन्धे चाङ्गी रस एक एव उपनिबध्यमानोऽर्थविशेषलाभं छायातिशयं च पुष्णाति। कस्मिन्निवेति चेत् ... यथा रामायणे, यथा वा महाभारते। रामायणे हि करुणो रसः स्वयमादिकविना सूत्रितः "शोकः श्लोकत्वमागतः" इत्येवंवादिना। निर्व्यूढश्च स एव सीतात्यन्तवियोगपर्यन्तमेव स्वप्रबन्धमुपरचयता" इति। महाभारतेऽपि वीराद्यङ्गरसव्यञ्जकावान्तरवाक्यविशिष्टाङ्गिभूतशान्तरसव्यञ्जकप्रधानवाक्यस्य महावाक्यत्वं स्पष्टं दृश्यते। तदेतत् सुष्ठु प्रतिपादितं ध्वन्यालोके चतुर्थोद्योते।[10]

काव्यप्रकाशे च पञ्चमोल्लासे तात्पर्यार्थं प्रतिपादयता मम्मटेन एकवाक्यताऽऽश्रिता।[11] उक्तं च तेन ..... "यन्तु विषं भुङ्क्ष्व मा चास्य गृहे भुक्थाः इत्यत्र एतद्गृहे न भोक्तव्यमित्यत्र तात्पर्यमिति स एव वाक्यार्थ इत्युच्यते, तत्र चकारः एकवाक्यतासूचनार्थं" इति। एकवाक्यता चात्र वाक्यैकवाक्यता। अस्य गृहे भोजनाद्वरं विषभक्षणमिति विषं भुङ्क्ष्वेत्यादि महावाक्यस्य तात्पर्यम्।

साहित्यदर्पणेऽपि महावाक्यलक्षणं प्रतिपादितं विश्वनाथेन[12] .... "वाक्योच्चयो महावाक्यम्" इति। "योग्यताकाङ्क्षासत्तियुक्त एव" इति तस्यैव वृत्तिः। तेन च "योग्यताकाङ्क्षासत्तिसहितः वाक्यसमुदायः महावाक्यम्" इति तात्पर्यं सिद्ध्यति। महावाक्यस्योदाहरणं च "रामायणमहाभारतरघुवंशादि इत्युक्तम्। तन्त्रवार्तिके[13] च .... "एवं भारतादिवाक्यानि व्याख्येयानि" इत्युक्तम्।

तत्र वाक्यानीत्यस्य महावाक्यानीत्यर्थः। भारतस्य सर्वाण्यपि, अथवा भारत-गतर्ववाक्यानामपि यथाकथञ्चित् "धर्मराजादिवद्वर्तितव्यं, न तु दुर्योधनादिवत्" इति विधिवाक्येन सह वाक्यैकवाक्यता। एवमेव रामायणगतानां सर्वेषामपि वाक्यानां "रामवद्वर्तितव्यं, न तु रावणादिवत्" इति विधिवाक्येन वाक्यैक-वाक्यतया महावाक्यत्वम्। विधिवाक्यानि चात्र कल्पितानि। एतेषामेव च विधिवाक्यानां समुदायसमाप्तिमाश्रित्य महावाक्यसंज्ञेति पूर्वं प्रतिपादितमेव। तथा रघुवंशकिरातार्जुनीयादिकाव्यानि प्रत्येकं महावाक्यानि। "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" इति जैमिनिसूत्रं, स्वार्थबोधे समाप्तानामङ्गा-ङ्गित्वव्यपेक्षया, वाक्यानामेकवाक्यत्वं पुनस्संहत्य जायते इति तन्त्रवार्तिक-श्लोकश्च काव्यादीनां सर्वेषामपि वाग्वैभवानां महावाक्यत्वप्रतिपादनपरम् इति वक्तुं पारयामः - किञ्च सर्वत्र काव्ये अष्टादशवर्णनानां तत्तद्विषयप्राशस्त्य-कथनापरत्वात् अर्थवादानामिव प्रधानवाक्येनाथवा विधिवाक्येन सह पदैक-वाक्यतया महावाक्यार्थबोधः समुचितः। अत्र च समग्रः विचारः "विधिना-त्वेकवाक्यत्वात्" इति सूत्रे तन्त्रवार्तिके कृतः।

इदमत्रावधेयम् - वाक्यं महावाक्यं च विवक्षामनुसृत्य भवति। तद्यथा .... एकार्थीभावबोधकस्य पदसमूहस्य वाक्यसमुदायस्य महावाक्यत्वम्। वाक्यं महावाक्यगतमवान्तरवाक्यमिति व्यवह्रियते। वर्णनादयः यदा स्वीकृताः तदा तत्तद्विशेषणविशिष्टं वस्तु एकेन महावाक्येनोपवर्ण्यते। यदा प्रबन्धः सम्पूर्णः एकत्वेन स्वीक्रियते तदा तदनुगतानां वर्णनादीनाम् अवान्तरवाक्यत्वम्। अर्थात् विवक्षितार्थमनुसृत्य वाक्यं, महावाक्यं वा प्रयुज्यते लोके, शास्त्रे च। एवमुप-

मानोपमेयादिभावबोधकानां वाक्यसमूहानां महावाक्यत्वं पार्थक्येन सिद्ध्यति। परं तु यदा काव्यमेव महावाक्यत्वेन स्वीकृतं तदा तत्काव्यगतानां सर्वेषामपि मुक्तकयुगलकुलकादीनामवान्तरवाक्यत्वम्। एकवाक्यता चात्रोपकार्योप-कारकभावेन। शास्त्रग्रन्थादिषु च प्रकरणानामवान्तरवाक्यत्वमित्यादिनिर्णयः सर्वत्र समान एव। आनन्दवर्धनेन च विभावानुभावादयः औचित्यं, सन्धि-सन्ध्यङ्गाः, अलङ्काराश्च रसस्याङ्गभूता इति प्रतिपादितम्। प्रबन्धगताङ्गिरसस्य व्यञ्जकत्वे सर्वेऽप्युक्ताङ्गा उपयुज्यन्ते। रसप्रतिपादकवाक्यानाम् अङ्गभूत-विभावादिबोधकवाक्यानां च परस्परमङ्गाङ्गिभावेनैकवाक्यता। तेन सर्वस्याऽपि प्रबन्धस्य महावाक्यत्वम् एकार्थीभूतरसप्रतिपादकत्वात्। कारिका इमा व्यञ्जयन्त्यर्थममुम्[14] .....

विभावभावानुभावसञ्चार्यौचित्यचारुणः।
विधिः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य वा॥

..... ..... ...... ...... .....

सन्धिसन्ध्यङ्गघटनं रसाभिव्यक्त्यपेक्षया।
न तु केवलया शास्त्रस्थितिसम्पादनेच्छया॥
उद्दीपनप्रशमने यथावसरमन्तरा।
रसस्यारब्धविश्रान्तेरनुसन्धानमङ्गिनः॥
अलङ्कृतीनां शक्तावप्यानुरूप्येण योजनम्।
प्रबन्धस्य रसादीनां व्यञ्जकत्वे निबन्धनम्॥ इति॥

अपि च विवक्षामनुसृत्यैव महावाक्यसंज्ञा इत्युक्तत्वात् महावाक्यस्य नानन्त्यम्। अयं महावाक्यार्थः शृङ्गारप्रकाशे अष्टमप्रकाशे सुष्ठु निरूपितः।

इदं महावाक्यमेव अनादिनिधनमखण्डं शब्दब्रह्मेति वैयाकरणैरुक्तम् इति प्रतिपादितं भोजराजेनेत्थम्[15] ....... "यस्तु तद्रूपरामायणादिप्रबन्धार्थानामवधारणेनोपहितसंस्कारस्य रामवद्वर्तितव्यं न रावणादिवदित्यादिविधिनिषेधप्रतिभाविशेष उपजायते, स समस्तविश्वव्यापी चतुर्वर्गैकहेतुः परो महावाक्यैकार्थोऽर्थमूर्त्या विपरिणतमनादिनिधनमखण्डं शब्दब्रह्मेत्युच्यते" इति।



# उपसंहारः

एवं च पूर्वोत्तरमीमांसाव्याकरणन्यायवैशेषिकालङ्कारशास्त्रानुसारेण महावाक्यसम्प्रदायो निरूपितः। तदयमेवमुपसंहर्तुं शक्यते ग्रन्थः - वेदेषु, लोकव्यवहारे, शास्त्रेषु च विवक्षितार्थमनुसृत्यैव वाक्यस्य महावाक्यस्य वा प्रयोगः परिदृश्यते। अर्थो लघुश्चेद्वाक्यं, गुरुश्चेन्महावाक्यं च प्रयुज्यते। सम्पूर्णार्थबोधकपदानां समुदायस्य वाक्यमिति यथा शब्दसंज्ञा, तथैव सम्पूर्णार्थबोधकवाक्यसमुदायस्य महावाक्यमिति संज्ञा प्रवर्तते। आकाङ्क्षा-योग्यतासत्तीनामावश्यकता यथा वाक्ये तथैव महावाक्येऽपि वर्तते। वाक्ये पदानां पदैकवाक्यता, महावाक्ये च वाक्यानां वाक्यैकवाक्यता सम्भवति।

मीमांसकैरर्थैकत्वमाश्रित्यैव वाक्यसमुदायस्य महावाक्यसंज्ञा प्रदत्ता। तथाऽपि वेदस्य धर्मप्रयोजकत्वात्, धर्मस्य च चोदनालक्षणत्वात्, यथा यथा चोदना जायते तथा तथा शाब्दबोधः कल्पनीयः। यथा एकैकमपि वैदिकमक्षरं निरर्थकं न स्यात् तथा अर्थकल्पना कर्तव्या। एवं च प्राशस्त्यनिन्दावाचक-वाक्यानां तत्तत्कार्येषु प्रवृत्तिनिवृत्यर्थत्वं यथाकथञ्चित् प्रधानभूतेन विधि वाक्येन सह तेषामन्वयकल्पनाद्द्वारा साधनीयमिति स्पष्टीभवति। आम्नायस्य कृत्स्न-स्यापि क्रियार्थत्वं तेन सिद्ध्यति। तस्मादर्थवादवाक्यविधिवाक्यसमुदायस्य महावाक्यत्वं शेषशेषिभावमाश्रित्य परिकल्पितं मीमांसकैः। अर्थवादानां प्राशस्त्यबोधने एव तात्पर्यमिति कृत्वा प्रशस्तपदेन सह विधिवाक्यस्य पदैकवाक्यतां परिकल्प्य, सिद्धं विशेषणयुक्तवाक्यं महावाक्यमिति ते व्याजह्रुः।

अयं च लाक्षणिको व्यवहारः। वाक्यसमुदायस्यैव महावाक्य संज्ञायाः न्याय्य-त्वात्। विशेषणसहितवाक्ये महत्त्वस्य दुस्साध्यत्वाच्च। एवमेव "नोद्यन्तमादि-त्यमीक्षेत" इत्यादि नञ्‌युक्तवाक्यानामपि औपचारिकी महावाक्यसंज्ञा। मीमांसकानां मतमनुसृत्य नञ्‌विशिष्टवाक्येषु प्रथमं नञ् वर्जितेन अवान्तरवाक्येन वाक्यार्थबोधो विधिरूपो जायते। किन्तु तस्य साकाङ्क्षत्वात् न प्रामाण्यम्। तेन महावाक्यार्थरूपः प्रतिषेध एव बोध्यते इति तात्पर्यस्य न काचन क्षतिः। मीमांसकानां मते महावाक्यविषयेऽपि पदैकवाक्यता स्वीकृता। अवान्तर-वाक्यानां चार्थवत्त्वात् दर्शपूर्णमासादिस्थलेषु वाक्यैकवाक्यता। तत्र अङ्गाङ्गि-भावेनैकार्थबोधकत्वात् वाक्यैकवाक्यतया महावाक्यार्थसिद्धिः। स्वार्थे परिसमाप्तानामेवाङ्गाङ्गिवाक्यानां वाक्यैकवाक्यतेति नियमाश्रयणादवान्तर-वाक्यानामप्यर्थबोधकत्वमस्त्येव। अन्यथा तत्तदवान्तरवाक्यचोदितकर्मान-नुष्ठानमापद्येत। पूर्वमीमांसकानां मते क्त्वान्तानां (ल्यबन्तानां) अभिषुत्य हुत्वा भक्षयति, मुखं व्यादाय स्वपितीत्यादीनां महावाक्यसंज्ञा उपचारेणैव।

वेदान्तिनां मते तत्त्वमसीत्यादीनां महावाक्यसंज्ञा औपचारिक्येव। तत्र यद्यपि तद्वाक्यविशिष्टग्रन्थस्य वाक्यसमुदायात्मकस्य महावाक्यसंज्ञोद्दिष्टा, उपक्रमोपसंहारादिभिरेकार्थबोधकत्वात्, तथाऽपि पिण्डीकृतस्य कृत्स्नस्य ग्रन्थस्यार्थं तत्त्वमस्यादिवाक्यमेव बोधयतीति, तद्वाक्यबोध्यमर्थं पुरस्कृत्य तस्य महावाक्यसंज्ञा। सम्प्रदायश्चायं पूर्वकाण्डोपज्ञ एव। तत्र हि पदैकवाक्यता-सिद्धेषु विशेषणयुक्तवाक्येषु महावाक्यत्वं लाक्षणिकत्वेन स्वीकृतम्। एव-मत्राऽपि ग्रन्थसारभूतमर्थं वक्तीति वाक्यस्याऽपि महावाक्यसंज्ञा। तद्वाक्य-गतशब्दैर्लक्षणया विशिष्टमर्थं वक्तीति वा।

वैयाकरणानां मते महावाक्यं वाक्यमिवाखण्डमेव। तत्रावान्तर-वाक्यानां वस्तुतः नार्थबोधकत्वम्। किन्त्वपोद्धारेण सुखबोधायावान्तर-वाक्यानि कल्पितानि। पदे वर्णानां, वाक्ये पदानां च सत्ता यथा मृषा तथा महा-वाक्येऽपि अवान्तरवाक्यानामर्थवत्त्वं नास्तीति कैमुत्यन्यायसिद्धैव।

पाणिनिनाऽपि महावाक्यार्थबोधं मनसि निधायैव स्वशास्त्रं निरमायीति निश्चप्रचं ज्ञायते। तच्च कुमारिलेन स्वयं निरूपितं तन्त्रवार्तिके। यद्यपि महावाक्यविषये सर्वत्राऽपि वाक्यैकवाक्यतैव न्याय्या, तथाऽपि केचन वैयाकरणाः संज्ञासूत्रवाक्यानां विधिवाक्येन सह पदैकवाक्यतां समर्थयन्ति। वस्तुतस्तु तत्रापि वाक्यैकवाक्यतैवोचिता। निषेधवाक्यानामपि उत्सर्गवाक्ये-नैकवाक्यतयैव बोधः। वक्तुः उभयविषयकमपि ज्ञानं प्रयोगकाले वर्तत एव। किन्तु श्रोतुः सुखबोधाय उत्सर्गवाक्यं प्रथमं प्रयुज्य ततो निषेधवाक्यं प्रयुङ्क्ते। तथाच श्रोता निषेधवाक्यार्थमुत्सर्गवाक्यार्थेन समन्वीय महावाक्यार्थं स्वयं जानीते। पन्थाश्चायं लोकवेदयोस्तुल्य एव।

वैयाकरणैः महावाक्यविषये द्वे पद्धती अनुसृते। प्रत्येकपरिसमाप्तिः समुदायपरिसमाप्तिश्चेति। मीमांसकास्तु समुदायसमाप्तिमेवोररीकुर्वन्ति। प्रत्येकपरिसमाप्तिं वाक्यभेददोषत्वेन परिगणयन्ति।

नैयायिकैश्च परार्थानुमानज्ञानाय यः पञ्चावयवसमुदायः प्रतिज्ञाहेतू-दाहरणोपनयनिगमनरूपः स महावाक्यत्वेन स्वीकृतः। प्रतिज्ञादिसूचकवाक्यानां परस्पराकाङ्क्षैव तत्र निदानम्। वैशेषिका एव प्रथमं विषयममुं निरूपितवन्तः। सैव सरणिर्नैयायिकैरनुसृता।

आलङ्कारिकाश्च समर्थ्यसमर्थकादिभावानुसारेण यत्र द्वयोर्वाऽधिकानां वा वाक्यानां परस्परसम्बन्धो गम्यते तत्र वाक्यैकवाक्यतया महावाक्यार्थबोधं स्वीचक्रुः। तत्र परस्परसम्बन्धेनैव वाक्यानामाकाङ्क्षोत्थाप्यते। एवमेव "यत्तत्", "यावत्तावत्", "यदा तदा", "यथा तथा", "यदि तर्हि", "तथाऽपि", "न केवलम्", "अपि च" इत्यादिभिः नैकवाक्यसम्बन्धसाधकैः द्वन्द्वैः सह वाक्ययोर्वाक्यानां वा रचना यदि दृष्टा तत्र वाक्यैकवाक्यतया महावाक्यार्थबोध एव स्वीकार्यः। व्याख्यानेषु च तत्र तत्र अनेकेषां प्रकरणानां, विषयाणां वा सङ्गतिं प्रतिपादयन्ति व्याख्यातारः। स च सङ्गतिशब्दः तत्तत्प्रकरणानां विषयाणां वा परस्परसम्बन्धबोधकः। तेन वाक्यैकवाक्यतया महावाक्यार्थसिद्धिः। दीर्घदीर्घतरग्रन्थरूपमहावाक्यान्तः पातिनां त्वेतादृशानां महावाक्यानामवान्तरवाक्यत्वम्। एवं चार्थैक्यं विवक्षितार्थं चानुसृत्यैव महावाक्यावान्तरवाक्यतदर्थनिर्णयः। अत एव "वाक्योच्चयो महावाक्यम्" इत्यालङ्कारिकसमयः, "वाक्यानां समुदायश्च य एकार्थप्रसिद्धये" इति वैयाकरणं महावाक्यलक्षणम्। "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" इति मीमांसकोक्तमहावाक्यलक्षणं च सङ्गच्छते। अर्थैकत्वं यावतां वाक्यानां दृष्टं तावतां वाक्यानां वाक्यैकवाक्यतया महावाक्यार्थबोधः सकलशास्त्रसम्मतः। तेन कुलकादीनां स्वतन्त्राणां प्रत्येकं महावाक्यत्वेऽपि न क्षतिः। रामायणे च बालकाण्डे "नारदस्य तु तद्वाक्यम्" इति प्रयोगश्च सङ्गच्छते। अनेकवाक्यसमुदाये वाक्यत्व स्यान्याय्यत्वात्।

रामायणभारतरघुवंशादिकाव्यानां महावाक्यत्वं चार्थैक्यं मनसिकृत्यैव निरूपितमालङ्कारिकैः। "रामवद्वर्तितव्यम्, न रावणवत्" इत्यादीनां तु

महावाक्यसंज्ञा तत्तद्ग्रन्थसारबोधकत्वमाश्रित्यैव, "तत्त्वमसी"त्यादीनामिवेति वक्तुं प्रभवामः। लोकेऽपि नित्यव्यवहारे अन्नं पच्यतां, पिता च भुक्त्वा ग्रामान्तरं गच्छति, गां चानेष्यति इत्यादिमहावाक्यानि लक्ष्यन्ते।

बौद्धजैनादीनामवयवसंख्याविषये सत्यपि मतभेदे परार्थानुमानरूपार्थैक्यस्य तत्राऽपि तुल्यत्वात् तेषामपि महावाक्यार्थबोधेनैव परार्थानुमानजनकत्वम्। अयमेव च वाक्यमहावाक्यसम्प्रदायः सर्वैरपि शास्त्रान्तरैः समभ्युपागत इति वक्तुं पारयामः। शास्त्रेष्वितरेषु मन्त्रतन्त्रज्योतिषादिषु कण्ठोक्त्या नेयं सरणिर्दृश्यते, तथाऽपि सा नान्तरीयकैवेति वक्तव्यम्। पूर्वमीमांसादिशास्त्रेषु च साटोपमयं मार्गः प्रहत इति तानि शास्त्राणि केन्द्रतया स्वीकृतानीति सूचितमेव प्राक्। अत एव तन्त्रवार्तिके कुमारिलेन सर्वशास्त्राणामेकवाक्यतयैवोपदेशः प्रतिपादितः। तस्मात् सर्वं सुष्ठ्विति भवतु बुधानां मोदादायं महावाक्यविचारः।



# संग्रहश्लोकाः

१. स्वार्थे परिसमाप्तानामाकाङ्क्षायोग्यतावताम्।
वाक्यानां समुदायो हि महावाक्यमितीर्यते॥

२. अवान्तराणां वाक्यानां महावाक्ये तथा गतिः।
यथा वाक्ये पदानां च दृश्यते लोकवेदयोः॥

३. महावाक्ये च वाक्ये च दृष्टोऽर्थस्य समापनम्।
विवक्षितार्थमाश्रित्य प्रयोगो लक्ष्यते तयोः॥

४. यत्तदादिपदैर्यश्च सम्बन्धः परिकल्प्यते।
एकार्थबोधनाय स्यात् तेन सिद्धैकवाक्यता॥

५. एकार्थबोधकत्वादेवैकवाक्यत्वमिष्यते।
पदैकवाक्यता चाऽपि वाक्यपूर्वैकवाक्यता॥

६. पदैकवाक्यता वाक्ये महावाक्ये च साऽपरा।
यथार्थं परिजानीयात् द्वयोरपि गतिं सदा॥

७. पदैकवाक्यता कैश्चिन्महावाक्ये समादृता।
तत्र लाक्षणिकी संज्ञा शास्त्रकारैस्समीरिता॥

८. नञ्प्रशस्तादियुक्तानां वाक्यानां विधिबोधिनाम्।
तद्बोध्यमर्थमाश्रित्य संज्ञा ज्ञेयौपचारिकी॥

९. तत्त्वमस्यादिवाक्यानां महावाक्यप्रथा तथा।
कृत्स्नं प्राकरणिकार्थं च बोधयन्तीति कारणात्॥

१०. अखण्डं च महावाक्यं केचिद्दार्शनिका विदुः।
अवान्तराणां वाक्यानां सिद्धिः काल्पनिकेति च॥

११. प्रत्येकं परिसमाप्तिं ते समुदाये तथैव च।
महावाक्यस्य विन्दन्ति द्वितीया सर्वसम्मता॥

१२. स्वार्थानुमानवान् कश्चित् ब्रूतेऽवयवपञ्चकम्।
तेनैव च परस्यानुमितिः सुष्ठूपजायते॥

१३. पञ्चैवावयवास्तत्र पञ्चवाक्यस्वरूपिणः।
एकं न्यायमहावाक्यं प्रकुर्वन्तीति तार्किकाः॥

१४. काव्यमेकं महावाक्यमर्थैकत्वस्य दर्शनात्।
वाक्यानां समुदायस्य नावधिः परिदृश्यते॥

१५. रामादिवद्वर्तितव्यं न चरेद्रावणादिवत्।
इत्यादीनां महावाक्यसंज्ञा लाक्षणिकी मता॥

१६. एवं षट्स्वपि शास्त्रेषु महावाक्यविचारणम्।
प्रस्तुतं हि मया तेन सन्तुष्येयुर्बुधास्सदा॥



# सन्दर्भनिर्देशाः

**उपक्रमः**

1. छा. 7.2.1
2. वा.प.2.123
3. वा.प.3.124
4. का. 1.1.3,4
5. निरु. 1.1
6. मी.द. 2.1.14.46

**प्रथमपरिच्छेदः**

1. मी.न्या.प्र.पृ.116.
2. मी.द. 2.1.14.46
3. तं.वा.3.3.4.11
4. तं.वा.3.3.7.14
5. तं.वा.1.4.13.24
6. तं.वा.2.1.14.46
7. वृ. 1.1.5.5
8. श्लो.वा.प्रत्यक्षसूत्रम् 9 श्लो.
9. शा.भा. 3.2.10.27, 6.1.1.3,
   2.2.11.26, 3.6.7.22
10. तं.वा.2.1.14.46
11. तं.वा.3.4.4.13
12. तं.वा.2.1.14.46
13. तै.आ.2.15
14. मी.द.1.2.1.7
15. तै.सं.2.1.1
16. शा.भा.1.2.4.31, 1.4.1.1
17. तं.वा.1.4.1.1
18. टुप्टीका 10.7.9.27
19. तं.आ.3.4.4.13
20. शा.भा.6.4.7.25
21. तं.वा.1.2.1.7
22. शा.भा.1.2.1.7
23. वृ.पृ.147
24. शा.भा.2.4.2.21
25. तै.सं.1.5.1.2
26. मी.द.1.2.1.10
27. शा.भा.1.2.1.10
28. मी.द.1.2.1.10
29. तै.सं.2.2.5
30. शा.भा.1.4.10.22
31. तं.वा.1.4.11.22

32. तं.वा.1.4.11.20
33. मी.द.1.4.11.20
34. वृ.1.4.11.21
35. तं.वा.1.4.11.20
36. शा.भा.2.3.14.1
37. तं.वा.2.3.14.1
38. मी.द.2.3.14.2
39. तं.वा.2.3.14.2
40. मी.द. 3.2.10.27
41. शा.भा.3.2.10.27
42. तै.सं.2.5.11
43. शा.भा.3.4.1.9
44. तं.वा.3.4.1.9
45. शा.भा.3.4.1.9
46. तं.वा.3.4.1.9
47. मी.द.3.4.2.10
48. जै.न्या.3.4.6/7.10
49. तै.सं.1.6.8
50. तै.सं.2.6.3
51. मी.द.3.4.3.11
52. तै.सं.6.1.1
53. मी.द.4.3.1.1
54. श.कौ. । साधुत्वनिर्वचने
55. मी.द.4.4.12.40
56. शा.दी.4.4.15
57. मी.द. 6.4.7.25
58. शा.भा.6.4.7.25
59. मी.द.1.2.2.22
60. मी.द.6.7.12.30
61. शा.भा.2.4.2.21
62. मी.द.9.2.8.30
63. मी.द.10.1.4.7
64. टुप्टीका.10.1.4.7
65. शा.भा.1.1.1.6
66. मी.द.11.1.1.5
67. मी.द.11.1.1.6
68. मी.द.11.1.2.13
69. शा.भा.3.7.1.4
70. शा.भा.3.3.4.11
71. मो.द.4.4.11.34
72. मणि.पृ.99
73. तं.वा.3.1.2.2
74. प्र.पु.पृ.408
75. अ.सि.2.परि.

अखण्डार्थ निरूपणम्

76. श्लो.वा.वाक्या. 330.248, 249, 250
77. निरु.अ.१
78. अ.सि.2. परि.

अखण्डार्थनिरूपणम्

79. प्र.प.1.1.5
80. श्लो.वा.वाक्या.139.144
81. शा.भा.6.4.7.25
82. श्लो.वा.वाक्या.262, 263
83. वा.प.1.4, 1.73, 2.112
84. श्लो.वा.वाक्या. 346
85. म.भा.पस्पशा.
86. मी.द.1.1.5.5

**द्वितीयपरिच्छेदः**

1. ब्र.सू.1.1.4.
2. भामती, अध्यासभाष्यम्
3. शां.भा.1.1.31
4. श्रीभा.1.1.4
5. स.द.सं.पृ.217, 219
6. बृ.आ.4.51
7. कौ.ब्रा.3.1
8. छां.उ.4.1.1
9. ब्र.सू.3.4.24
10. बृ.आ.4.5.6
11. छां.उ.4.3.1
12. श्रीभा.1.1.1
13. श्रीभा.1.1.1
14. श्रीभा.1.1.1
15. अ.भा.1.1.1
16. अ.भा.1.1.2
17. आ.तो.ज.भा.1.1.4

**तृतीयपरिच्छेदः**

1. वा.प.2.76
2. वा.प.2.76
. वा.प.2.88
4. वा.प.2.112
5. वा.प.2.325
6. अ.3.2.114
7. वा.प.2.76
8. ल.मं.आकाङ्क्षानिरूपणम्
9. ल.मं. तात्पर्यनिरूपणम्
10. वा.प.389

**चतुर्थपरिच्छेदः**

1. तं.वा.3.4.4.13
2. म.भा.4.1.1

3. वा.प.2.314
4. वा.प.2.314
5. तं.वा.1.4.13.24
6. अ.1.1.67
7. अ.4.2.33
8. म.भा.1.1.10
9. अ.1.3.2
10. अ.1.1.71
11. अ.1.1.9
12. अ.1.1.66
13. म.भा.1.1.11
14. अ.1.1.1
15. अ.6.1.88
16. अ.6.1.72
17. अ.6.1.84
18. अ.6.1.89
19. अ.7.2.85
20. अ.7.2.84
21. अ.1.1.66
22. अ.8.2.1
23. अ.2.1.11
24. अ.8.1.16
25. अ.6.4.11
26. म.भ.1.1.49
27. म.भा.3.4.67
28. अ.3.2.56
29. म.भा.3.4.67
30. अ.3.2.1
31. अ.3.2.3
32. म.भ.3.4.67
33. वा.प.2.346, 347
34. वा.प.2.348
35. वा.प.2.351
36. तं.वा.1.4.13.24
37. वा.प.2.349
38. अ.2.4.71
39. अ.6.3.1
40. म.भा.3.4.67
41. अ.1.2.46
42. अ.1.2.45
43. अ.2.4.71
44. अ.6.3.1

**पञ्चमपरिच्छेदः**

1. वै.द.9.2.342, 343
2. वै.द.9.2.345

3. प्र.भा.पृ.99
4. प्र.भा.पृ.113
5. प्र.भा.पृ.114
6. प्र.भा.पृ.114
7. न्या.भा.1.1.39
8. वै.द.9.2.345
9. प्र.भा.पृ.116
10. प्र.भा.पृ.125
11. न्या.भा.सू.1.1.32
12. न्या.भा.टीका.1.1.32
13. न्या.भा.सू.1.1.33
14. न्या.भा.सू.1.1.34
15. न्या.भा.सू.1.1.35
16. न्या.भा.सू.1.1.36
17. न्या.भा.सू.1.1.37
18. न्या.भा.सू.1.1.37
19. न्या.भा.सू.1.1.39
20. न्या.मं.द्वि.भा.पृ.144
21. गादा.अव.पृ.1530

**षष्ठपरिच्छेदः**

1. का.सं.पृ.29
2. का.सं.पृ.३०
3. का.सं.पृ.32
4. का.सं.पृ.33
5. शा.भा.2.4.2.21
6. का.सं.पृ.61
7. का.सं.पृ.66
8. ध्व.पृ.487
9. ध्व.पृ.1333
10. ध्व.पृ.1336
11. का.प्र.5 उल्ला.
12. सा.द.2.1
13. तं.वा.1.2.1.7
14. ध्व.पृ.773
15. शृ.प्र.8 प्रकाशः।



## सहायकग्रन्थसूची


१. अणुभाष्यम् - वल्लभाचार्यः, भण्डार्कर, पूना, १९२६.

२. अद्वैतसिद्धिः - मधुसूदनसरस्वती, मैसूरु विश्वविद्यालयः, १९३७.

३. आनन्दतीर्थचतुस्सूत्रभाष्यम् - मध्वाचार्यः, ला जर्नल्, मद्रास, १९३४.

४. उपनिषद्भाष्यम् - शङ्कराचार्याः, बङ्गलूरु प्रेस, बङ्गलूरु, १९२७.

५. ऋग्वेदः - विश्वेश्वरानन्द, होषियारुपुरु, १९६४.

६. काव्यादर्शः - दण्डी, ओरियन्टल् बुक् एजन्सी, पूना, १९२४.

७. काव्यप्रकाशः - मम्मटः, आनन्दाश्रम, पूना, १९२९.

८. काव्यालङ्कारसङ्ग्रहः - भामहः, तुकाराम् जवाजी, मुम्बई, १९१५.

९. कौषीतकिब्राह्मणम् - आक्सफर्ड, लण्डन्, १९२०.

१०. गादाधरी - गदाधरभट्टः, चौखम्बा, वाराणसी, १९७०.

११. छान्दोग्योपनिषत् - मोतीलाल जलान्, गोरखपुर.

१२. जैमिनीन्यायमालाविस्तरः - सायणः, आनन्दाश्रम, पूना, १९४६.

१३. टुप्टीका - कुमारिलः, आनन्दाश्रम, पूना, १९३०.

१४. तन्त्रवार्तिकम् - कुमारिलः, आनन्दाश्रम, पूना, १९३०.

१५. तैत्तिरीयारण्यकम् - मैसूरु, १९७२.

१६. तैत्तिरीयसंहिता - वैदिकसंशोधनमण्डल, पूना, १९७२.

१७. ध्वन्यालोकः - आनन्दवर्धनः, मोतीलाल, दिल्ली, १९६३.

१८. निरुक्तम् - यास्कः, मेहरचन्द लक्ष्मणदास्, १९६३.

१९. न्यायभाष्यम् - वात्स्यायनः, चौखम्बा, वाराणसी, १९२५.

२०. परिभाषेन्दुशेखरः - नागेशः, आन्ध्रविश्वविद्यालयपरिषत्, विशाखपट्टणम्,१९७२.

२१. प्रशस्तपादभाष्यम् - प्रशस्तपादाचार्यः, चौखम्बा, वाराणसी, १९२६.

२२. प्रकरणपञ्चिका - शालिकनाथमिश्रः, बनारस् हिन्दू यूनिवर्सिटी, १९६१.

२३. बृहती - प्रभाकरः, निर्णयसागर, मुम्बई, १९३१.

२४. बृहदारण्यकोपनिषत् - चौखाम्बा, वाराणसी, १९८१.

२५. ब्रह्मसूत्रम् - व्यासः, चौखम्बा, वाराणसी, १९३९.

२६. मणिप्रभा - धर्मराजाध्वरिः, श्री वेङ्कटेश्वर प्रेस्, मुम्बयी, शक.२८३३

२७. महाभाष्यम् - पतञ्जलिः, चौखाम्बा, वाराणसी, १९८१.

२८. मीमांसाकोशः - प्राज्ञपाठषालामण्डलः, गङ्गापुरी (वायि), १९५४.

२९. मीमांसादर्शनम् - जैमिनिः, आनन्दाश्रम, पूना, १९३०.

३०. मीमांसान्यायप्रकाशः - आपदेवः, चौखाम्बा, वाराणसी, १९४९.

३१. (वैयाकरणसिद्धान्त) लघुमञ्जूषा - नागेशः, चौखाम्बा, वाराणसी, १९७३.

३२. वाक्यपदीयम् - भर्तृहरिः, भण्डार्कर, पूना, १९७८.

३३. वेदार्थसङ्ग्रहः - रामानुजाः, पाण्डुरङ्ग जवाजी.

३४. वैशेषिकदर्शनम् - कणादः, चौखाम्बा, वाराणसी, १९२६.

३५. शब्दकौस्तुभः - भट्टोजिदीक्षितः, चौखाम्बा, वाराणसी, १९२९.

३६. शाबरभाष्यम् - शबरस्वामी, आनन्दाश्रम्, पूना, १९३०.

३७. शास्त्रदीपिका - चौखम्बा, वाराणसी.

३८. शृङ्गारप्रकाशः - भोजः, श्रीनिवासजोश्यर, मैसूर, १९६३.

३९. शाङ्करभाष्यम् - शङ्कराचार्यः, पाण्डुरङ्ग जवाजी, मुम्बयी, १९३८.

४०. श्रीभाष्यम् - रामानुजाः, वेदान्तदेशिकविहारसभा, १९६०.

४१. श्लोकवार्तिकम् - कुमारिलः, चौखाम्बा, वाराणसी, १८९८.

४२. सर्वदर्शनसङ्ग्रहः - सायणमाधवः, भण्डार्कर, पूना, १९७८.

४३. साहित्यदर्पणम् - विश्वनाथः, मोतीलाल, दिल्ली, १९७०.



# ग्रन्थानां सङ्केताक्षरसूची

| | | |
|---|---|---|
| अ. | - | अष्टाध्यायी |
| अ.भा. | - | अणुभाष्यम् |
| अ.सि. | - | अद्वैतसिद्धिः |
| आ.ती.च.भा. | - | आनन्दतीर्थचतुस्सूत्रभाष्यम् |
| ऋ. | - | ऋग्वेदः |
| का. | - | काव्यादर्शः |
| का.प्र. | - | काव्यप्रकाशः |
| का.सं. | - | काव्यालङ्कारसङ्ग्रहः |
| कौ.ब्रा. | - | कौषीतकिब्राह्मणम् |
| गा. | - | गादाधरी |
| छा. | - | छान्दोग्योपनिषत् |
| जै.न्या. | - | जैमिनियन्यायमालाविस्तरः |
| तं.वा. | - | तन्त्रवार्तिकम् |
| तै.सं. | - | तैत्तिरीयसंहिता |
| तै.आ. | - | तैत्तिरीयारण्यकम् |
| ध्व. | - | ध्वन्यालोकः |
| निरु. | - | निरुक्तम् |
| न्या.भा. | - | न्यायभाष्यम् |
| प.शे. | - | परिभाषेन्दुशेखरः |
| प्र.भा. | - | प्रशस्तपादभाष्यम् |

| | | |
|---|---|---|
| प्र.पं. | - | प्रकरणपञ्चिका |
| बृ. | - | बृहती |
| बृ.आ. | - | बृहदारण्यकोपनिषत् |
| बृ.सं. | - | बृहत्संहिता |
| ब्र.सू. | - | ब्रह्मसूत्रम् |
| मणि. | - | मणिप्रभा |
| म.भा. | - | महाभाष्यम् |
| मी.द. | - | मीमांसादर्शनम् |
| मी.न्या.प्र. | - | मीमांसान्यायप्रकाशः |
| ल.मं. | - | (वैयाकरणसिद्धान्त) लघुमञ्जूषा |
| वा.प. | - | वाक्यपदीयम् |
| वै.द. | - | वैशेषिकदर्शनम् |
| श.कौ. | - | शब्दकौस्तुभः |
| शा.भा. | - | शाबरभाष्यम् |
| शा.दी. | - | शास्त्रदीपिका |
| शां.भा. | - | शाङ्करभाष्यम् |
| शृं.प्र. | - | शृङ्गारप्रकाशः |
| श्री.भा. | - | श्रीभाष्यम् |
| श्लो.वा. | - | श्लोकवार्तिकम् |
| स.द.सं. | - | सर्वदर्शनसङ्ग्रहः |
| सा.द. | - | साहित्यदर्पणम् |



श्रीमते रामानुजाय नमः

न्यायवेदान्त विद्वान् - साहित्य विशारदः

## श्रीउ.वे. श्रीमान् समुद्राललक्ष्मणाचार्यः

श्रीमद्वेङ्कटरङ्गार्यशिष्यः सच्छिष्यशेवधिः ।
श्रीसम्प्रदायनिष्ठाग्र्यः जीयाच्छ्रीलक्ष्मणस्सुधीः ॥